विधानात्संख्यासामिधेन्यन्वयस्य वाक्येनैवाभ्युपगमनीयत्वापत्तेर्गुणफलान्वये ऽपि प्रकरणानपेक्षणात्सामिधेनीनां प्रकृतत्वाभावात्प्रकरणेनोपवीतग्रहणानुपपत्तेः सामिधेनीवाक्यानन्तर्गतत्वाच्च वाक्येनोपवीतग्रहणस्यानाङ्गत्वान्न काम्यानामपि सामिधेनीनामुपवीतमङ्गमिति परिहारार्थं नेति ब्रूम इत्यादि भाष्यं काम्येषु सामिधेनीकल्पेषु क्रत्वर्थसामिधेनीप्रकरणाननुवृत्तावपि काम्यसामिधेनीप्रकरणेनैवोपवीतग्रहणोपपत्तेर्गुणफलान्वयस्य च विच्छिन्नप्रकृताश्रयत्वेनानिष्टत्वादुपेक्ष्य स्वयङ्काम्यानां सामिधेनीनां प्राकृताङ्गनिराकाङ्क्षत्वेन प्रकरणाभावात्सद्भावे ऽपि देयत्वे सामिधेनीरनूच्येत्यस्याधारार्थवादाङ्गत्वेन सामिधेनीप्रकरणाननुवर्तकत्वादनुवर्त्तकान्तरस्य चानारङ्गीयत्वात्सन्निधिनोपवीतमङ्गं स्यात्तच्च प्रकरणात् दुर्बलं इत्येवं परिहारमाह * नैतदिति * श्लोकं व्याचष्टे * सर्वास्वेवेति * अतिदेशालभ्यानामपि प्राकृतानामङ्गानां फलतोपकारकत्वेनोपादिष्टेभ्यः प्राग्विकृतिभिर्ग्रहणात्पूर्वपदान्येनानुयाजान्यजतीत्यादीनां च प्राकृतानां गुणत्वेनोपदिष्टानामपूर्वाणामप्यङ्गानां स्वाङ्गपरिपूर्णप्राकृताङ्गमाहित्या विकृतिभावनया कृताङ्गग्रहणवेलायामेव ग्रहणात्तदङ्गानाश्चानिवृत्ताकाङ्क्षत्वात्प्रकरणेनैव प्राकृताङ्गगुणभूताप्राकृताङ्गग्रहणोपपत्तेस्तद्वच्चावृत्ते यदित्युक्तम् । प्राकृताङ्गग्रहणसमकाललक्षणार्थो मध्यशब्दः । अभिषेचनीयसन्निधिपठितानां विदेवनादीनां स्थानादभिषेचनीयाङ्गत्वस्य प्रतिभासमानस्य प्रकरणावगतेन राजसूयाङ्गत्वेन बाधो वक्ष्यमाणाधिकरणे वक्ष्यमाणः काम्यसामिधेनीसन्निधिनोपवीतस्य काम्यसामिधेन्यङ्गताया: प्रकरणावगतेन दर्शपूर्णमासाङ्गत्वेन बाधासिद्धे दृष्टान्तित: तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे * तस्मादिति *

॥ वाजपेयैकङ्कतादिपात्राणां कृत्स्नयागगुणताधिकरणम् ॥ १२ ॥

॥ मिथो ऽसम्बन्धन्यायो वा ॥

## गुणानां च परार्थत्वादसम्बन्धः समत्वा-

## त्स्यात् ॥ २२ ॥

पात्रविचारस्योपवीतविचारासङ्गतिमाशङ्क्य वाजपेयाङ्गत्वेनायगतस्य सप्तदशारत्नित्वस्य तत्रासम्भवात्तदङ्गपशुयागावतारे ऽभिहिते तेनैव न्यायेनाभिक्रमणोपव्यानयोः कर्माङ्गभूतकर्त्रवतारे सिद्धे किमभिक्रमणस्य कृत्स्नदर्शपूर्णमासाङ्गत्वात्तदङ्गेषु सर्वेष्वप्यवतारः प्र-

योऽजहोमाङ्गत्वाद्वा तदङ्गभूते ऽध्वर्युमात्रे उपवीतस्य च किं सामि-
धेन्यनुवचनमात्राङ्गत्वात्तदङ्गभूते होतृमात्रे ऽवतारः कृत्स्नदर्शपूर्ण-
मासाङ्गत्वाद्वा तदङ्गभूतेषु सर्वेर्त्विक्ष्विति विचारात्पर्यवसितस्या-
नर्थक्यतदङ्गावतारन्यायस्य पवमानेष्टीनामाधानाङ्गत्वे ऽपि यज्ञ-
स्याभावाद्वाधानप्रकरणपठितानां पात्राणां तास्ववतार इति प्रति
पादनात्स्वमतेनापवादतया सङ्गतिमाह * आनर्थक्यादिति * भाष्य-
मते तु किं पवमानेष्टीनामाधानाङ्गत्वात्पात्राणां तास्ववतारो ऽनङ्ग-
त्वाद्वानवतार इति विचारात्प्रासङ्गिकी सङ्गतिः । वैकंकतेषु नत्वे
तेनेति पर्युदासानुपपत्त्याशङ्कां निरस्यन्नन्यार्थेन इत्युदाहरणभाष्यं
३।६।४। व्याचष्टे * धारणेति * धारणानि होमव्यतिरिक्तपात्रकार्याणी-
ति वैकंकतानि सर्वपात्रकार्याणीत्यर्थः । प्रकरणेनाधानाङ्गत्वावग-
मात्पवमानेष्टिष्वेव निवेशः सर्वयागेषु वेति सन्देहायोगमाशङ्क्य
यज्ञे ऽनुचर्यते ऽनुष्ठीयते ऽनेनेति यज्ञावचरशब्देन यागाङ्गत्वाभिधाना-
त्प्रकरणगम्ययागरूपाधानाङ्गत्वबाधेन सन्देहोपपादनार्थं न चेत्या-
दि भाष्यं व्याचष्टे * यज्ञेति * किमित्यादि पूर्वपक्षभाष्यं व्याच-
ष्टे * आनर्थक्यादिति * पर्याप्तमित्यादि सिद्धान्तभाष्यं सङ्क्षि-
प्य व्याचष्टे * तथेति * श्लोकं व्याचष्टे * प्रकरणेति * केन
वाक्येनेत्यपेक्षायां वाक्यमुदाहरति * किमिति * भाष्यस्यस्येति फट-
पस्य यत्र वाक्येनाग्नेर्भवति तत्किं वाक्यमित्यन्यङ्गत्वप्रतिपा-
दकान्यपरामर्शार्थत्वं सूचितम् । पवमानेष्टीनां कैमर्थ्याकाङ्क्षायामा-
हवनीये जुहोतीति क्लृप्तफलाहवनीयसंयोगे तत्कल्प्यफलानामि-
ष्टीनां नादृष्टार्थत्वापादनायाऽगारे गावो धास्यन्तामगारे कुसुमानीत्यादिवत्
प्राधान्ये ऽपि सामर्थ्यविरोधाज्जुहोत्यनुत्पत्तित्वेन चेष्टिविरोधा-
नपेक्षणाद्विश्वजिद्वत्स्वर्गे ऽपि कल्प्यमाने जुहोत्युपलक्षिताद्यागात्स्व-
र्गो यागस्य चाहवनीयेनापरो ऽदृष्टः संस्कार इत्यदृष्टद्वयकल्प-
नातस्तैरग्निसंस्कारकल्पनस्यैवोचितत्वात्पवमानेष्टीनामप्याधानवद्वा-
पर्यवसानादग्न्यङ्गत्वात्तद्गतेर्वाधानाङ्गत्वेत्याशयः । सिद्धान्तभाष्यं दूष-
यति * तत्रेति * आहवनीयप्रयोजनाभिधायिवाक्यान्तराश्रु-
तत्वेनैव वाक्येनाग्निहोत्राद्युतया ऽऽहवनीयस्य प्रयोजनवत्त्वप्रती-
तेरभ्युपगमनीयत्वादग्निहोत्रादीनां पवमानेष्टीनां च श्रुताश्रुतफ-
लत्ववैषम्यं ऽप्येवं वाक्येनाहवनीयस्य कश्चिद् गुणत्वे क्व चित्प्रा-
धान्ये ऽभिधीयमाने वैरूप्यापत्तेः समस्यात्र श्रुतिलक्षणाविधिविरो-
धापत्तेः पवमानेष्टिवच्च विश्वजिदादीनामश्रुतफलत्वेनाहवनीयाङ्ग-
त्वापत्तेर्नानन्यार्थत्वं पवमानेष्टीनां गम्यत इत्याशयः । पवमानेष्टि-

नामपि च प्रकरणावगताधानाङ्गत्वेन फलवत्त्वान्नसायात्फलवद्-
फलत्वविशेषानुपपत्तेस्तद्वर्णनैकस्य वाक्यस्य गुणप्रधानभूता-
हवनीयोक्तिवैरूप्याभ्युपगमः सप्तम्याश्च श्रुतिलक्षणावैरूप्याभ्यु-
पगमाद्विश्वजिदादीनां चाहवनीयाङ्गत्वाभ्युपगमो न युक्त इत्याह *
सर्वे चेति * फलवदग्निहोत्रादिकर्मानुरोधेन च निष्पन्नाहवनी-
योपदेशादफलवत्पवमानेष्ट्यादिकर्मानुरोधेन च साध्याहवनीयस-
स्काविधानादाहवनीयशब्दप्रवृत्तावप्यस्मिन्पक्षे वैरूप्यं स्यादित्याह *
* निष्पन्नश्चेति * फलवत्कर्मानुरोधेनेत्यकारसदसद्भावाभ्यामावृ-
त्त्योभयत्र योऽयमाधदाहवनीये जुह्वति यद्गार्हपत्ये हवींषि श्रपयन्ति
यद्दक्षिणाग्नावन्वाहार्यं पचतीत्यनारभ्याधीतेऽप्य॰ कर्माङ्गत्वेनाहव-
नीयादिविधायिन्या ऽप्यत्र पवमानेष्टिप्रकरणाधीतेनानारभ्याधीताह-
वनीयवाक्यसदृशेनाहवनीयाङ्गतया पवमानेष्टिविधिर्भविष्यतीति
परमतेन भाष्यं समाधत्ते * तस्मादिति * नन्वश्रुतप्राकरणिकवा- ७५५।१
क्यकल्पनां विनाप्यनारभ्यवाक्यनाश्रुतहोमास्तु पवमानेष्टिषु आह-
वनीयमुपदेष्टुमशक्नुवन्त्यातिदेशात्प्राप्तेनाहवनीये प्रापयताङ्गत्वेना-
निष्पन्नाहवनीयमप्राप्ताशक्त साध्यत्वेन प्रापणावगमात्पवमानेष्टी-
नामग्न्यङ्गत्वसिद्धवर्तितदेशप्राप्तवाक्यव्यापारोक्तप्रयोजनत्वेन वाक्यो-
त्पत्त्युपपत्तेर्नाश्रुतवाक्यकल्पना युक्तेत्याशङ्कानिरासमूचनार्थं कि-
लशब्द । उपकारपूर्णातिदेशप्रवृत्ते पवमानेष्टिष्वनिष्पन्नत्वेना-
धारतया गुणत्वेन प्राप्तस्य तस्मिन् कार्यलोपात्कृष्णलेष्ववघातवदाह-
वनीयानिष्पत्तावप्याधानजन्यसंस्काररूपेणैकदेशानिष्पन्नत्वादतिदे-
शाभ्युपगमे ऽङ्गाप्रसक्त्याप्युपपत्ते॰ अतिदेशप्राप्तस्य चाहवनीयस्य
साध्यत्वाभ्युपगमे ऽन्यान्यानपक्षाद्धाधानानपक्षास्तु चेष्टिष्वतिदेशप्रा-
प्ते तादृशीनामेवाहवनीयाङ्गत्वापत्तेराधानपवमानेष्टिसमुच्चयाभ्युपग-
मविरोधप्रसङ्गादतिदेशप्राप्तस्याहवनीयस्य साध्यत्वानुपपत्तेनाश्रुत-
प्राकरणिकवाक्यकल्पनां विनाप्यङ्गत्वं पवमानेष्टीनां सत्स्यतीत्या-
शय । अनारभ्यवाक्यसदृशाश्रुतप्राकरणिकवाक्यकल्पने ऽप्या-
धानाङ्गत्वात्पवमानेष्टीनामाहवनीयोत्पादकत्वाभ्युपगमे ऽनारभ्याघा-
रादिवदाहवनीयस्यानिष्पन्नत्वेनाधिकरणतया संस्कार्यत्वायोगा-
त्सप्तमीभङ्गापत्तेः सम्मार्गादिवत्पवमानेष्टीनां कर्मविशेषप्रकरणान-
धीतत्वेन कर्मविशेषयोग्यताधानात्मकसंस्कारार्थत्वायोगात्साधा-
रणयोग्यताधानस्य चाहवनीयस्वरूपोत्पत्तिमात्रात्सिद्धेरुपनयना-
दिवत्सर्वकर्मसाधारणस्य सर्वयोग्यताधानात्मकसंस्कारार्थत्वायोगा-
दग्न्यङ्गत्वासिद्धेर्नाश्रुतकल्पना युक्तेत्येतत्समाधानं दूषयति * यद

रिति * कथं तर्हि सिद्धान्तसिद्धिरित्याशङ्क्य पूर्वपक्षयुक्ताधानाङ्गत्वाभ्युपगमेनापि पात्राणां पवमानेष्टिष्वनवतरणमुपपद्यतइत्याह * सन्यथापीति * अन्यथात्वमेव दर्शयति * भवन्तु नामेति * वाक्यगम्ययूपान्वयेन प्रकरणगम्यसाक्षाद्वाजपेयान्वयबाधाद्वाजपेयाङ्गयूपद्वारापि च सप्तदशारत्नित्वस्य वाजपेयोपकारता किञ्चिदस्तीत्यर्थः । यज्ञग्रहणं पवमानेष्टिष्ववतारकारणं[2] भविष्यतीत्याशङ्क्याह * यश्चेति * एकादशे ऽग्नियोग. सोमकाले तदर्थत्वात्सहकृतेः कर्मणः परेषु स्वाङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यादिति सूत्रेणाग्नेः साङ्गप्रधानार्थत्वेनाग्नियोगस्यापि तद्द्वारा साङ्गप्रधानार्थत्वाद्वसायास्साङ्गप्रधानापवर्गे ऽग्निविमोकं पूर्वपक्षयित्वा प्रधानापवर्गे तदर्थत्वादित्यनेन पञ्चभिर्युनक्ति पाङ्क्तो यज्ञ इति श्रुतेर्यज्ञशब्दस्य ■ स एष यज्ञः पञ्चविधो ऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति वाक्यालोचनया प्रधानयागवाचित्वावसायादग्नियोगस्य प्रधानयागमात्रार्थत्वावगतेः प्रधानमात्रापवर्गे ऽग्निविमोकसिद्धान्तस्य प्रधानार्थो योगः प्रधानसंयोगेन हि श्रूयते पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभतइति यज्ञप्राप्त्यर्थं युनक्तीति ज्ञायतइति भाष्ये वक्ष्यमाणत्वाद्वार्त्तिककृतापि यज्ञसंयोगार्थवादस्य पञ्चभिर्युनक्तीति गुणवाक्यशेषतयाग्निं युनज्मि शवसा घृतेनेति जुहोतीत्युत्पत्तिवाक्यशेषत्वाभावेन सिद्धान्तदूषणाद्यद्यपि यज्ञसंयोगो भग्नस्तथापि यज्ञशब्दो यागमात्रवचनो यागमात्रवचनश्चेद्दुर्यागानपि वदतीति वार्त्तिके च यागमात्रवाचित्वोक्तेश्चच्छब्देनैवानाभिमतत्वसूचनात्पवमानेष्टीनां प्राधान्याभावेन प्रधानयागवाचियज्ञशब्दवाच्यत्वाभावमभिप्रेत्य प्रकृतयज्ञाभावाद्दीर्घसोमे सन्तृद्यादितिवत्प्रकरणानुत्कर्षेणानारभ्यवादरूपतां प्रतिपाद्य सर्वेषु दर्शपूर्णमासादिषु प्रधानयागत्वाद्यज्ञशब्दवाच्येषु यज्ञावचरग्रहणं पात्राणि विदधातीत्युक्तम् । अनेन चाधानगुणभूतानां पवमानेष्टीनामपरार्थत्वेनायज्ञत्वात्प्रधानसमत्वाद्यज्ञसंयोगेन श्रुतेः पात्रैरसम्बन्धः स्यादित्येतत् सूत्रव्याख्या सूचिता । दर्शपूर्णमासादिषु जुह्वादिपात्राणामर्पणतादिविधानप्युलूखल दिपात्रेषु यागवैकर्तुत्वाविध्यविरोधः । यज्ञशब्दस्य प्रधानयागवाचित्वेन पवमानेष्टीनां यज्ञत्वाभावप्रदर्शनार्थमेतत्सूत्रमन्यथा तु पवमानेष्टीनां यज्ञत्वाभावाद्यज्ञसंयोगेन श्रुतानां पात्राणामप्यलक्षणप्रमाणविरोधेन प्र-

(१) [illegible] पादशाखे तु पवमानइत्यत्र [illegible] १० व पु० पाठ० ।

(२) [illegible] २ पु० पा० ।

करणादुत्कर्षेणं पूषाद्यनुमन्त्रणन्यायेनैव सेत्स्यतीत्यधिकरणानर्थक्यं स्यादित्याह * तच्चेति * सूत्रस्य तर्हि का गतिरित्याशङ्क्य शङ्कोत्तरत्वेन पूर्वाधिकरणशेषतया सूत्रद्वमथितव्यमित्याह * सूत्रन्त्विति * शेषतयेत्यध्याहार्यम्। कथमेतच्छङ्कोत्तरतास्य सूत्रस्येत्याशङ्क्याह * तदिति * तामेव व्याख्यां स्मारयति * तथा हीति *

॥ वार्त्रघ्न्यामनुवाक्यानामाज्यभागाङ्गताधिकरणम् ॥ १३ ॥

॥ वार्त्रघ्नीन्याय इति वा ॥

## मिथश्चानर्थसम्बन्धात् ॥ २३ ॥

यथावचरवाक्येन पाशायां प्रकरणाद्याधानाङ्गत्वबाधेऽभिहितेऽनुवाक्यानामपि क्रमावगताज्यभागाङ्गत्वबाधस्य प्रसक्तस्यापवादायैतदधिकरणमित्यनन्तरसङ्गतिमाह * यथासंयोगमिति * अनुवाक्यानां क्रमकृतमाज्यभागसंयोगमनादृत्य निवेशार्थमित्यर्थः। एवं तर्हि वाक्यबलीयस्त्वेन क्रमकृतसंयोगबाधनिश्चयात्सिद्धान्तानुपपत्तेः सन्देहो न युज्येतेत्याशङ्क्य * कुत इति * वाक्यक्रमकृतयोः संयोगयोः सम्प्रधारणे सन्देहायोगसूचनायेतिकरणः। वाक्यकृतस्य प्रधानसंयोगस्य क्रमविरोध्यविरोधित्वेन द्वेधा प्रतिभानात्सन्देहोपपत्तिरिति सूचयति * संयोगस्यैवेति * बाधकाबाधिमतवाक्यकृतसंयोगसूचनार्थमकार। । एतदेव विवृणोति * साधारण्येनेति * पौर्णमास्यमावास्याशब्दयोः कालकर्माणि च साधारण्यात्कालाभ्यामनुवाक्यानां संयोगः। कर्मभ्यामाग्नेयादिभिर्वेव वाक्यकृतः संयोगः सन्दिग्ध इत्यर्थः। कस्मिन्पक्षे क्रमवाक्ययोर्विरोधः कस्मिन्वा नेत्यपेक्षायामाह * विरुद्ध इति * वाक्येनानुवाक्यानामाग्नेयादिसम्बन्धे सति क्रमो वाक्यविरुद्धः कालसङ्गतौ ॥ विरुध्यत इत्यर्थः। एतदेवोपपादयति * तुल्यकक्षौ हीति * वाक्येनानुवाक्यानामाग्नेयादिकर्मसम्बन्धे क्रमावगम्येनाज्यभागसम्बन्धेन सहाङ्गाङ्गित्वरूपतया तुल्यत्वं कालसङ्गतौ त्वङ्गाङ्गिरूपत्वाभावेनातुल्यतेत्यर्थः। पूर्वपक्षमाह * नित्यमिति * यस्माद्वाक्यावगतामेवानुवाक्याभिः सङ्गतिर्युक्ता ननु कालयोः तस्माद्वाक्यावगतानुवाक्यानां प्रधानाङ्गतयाज्यभागाङ्गत्वबोधकः क्रमो बाधित इत्युक्तेऽनुवाक्याभिः कालयोरङ्गाङ्गित्वरूपसङ्गत्ययोगेऽपि व्यवस्थाप्यव्यवस्थापकत्वरूपा सङ्गतिर्भविष्यतीत्याशङ्कानिराससूचनार्थं नित्यमित्युक्तम्। ७५६।*

याज्य-

व्यवस्था-

ऽनुपपत्तेः कालकृताया व्यवस्थाया यदुच्यति वाक्येन दर्शपूर्णमास
सोमविकारेषु पौर्णमास्यमावास्याकालविधानात्पौर्णमास्या द
र्शविकारानुष्ठाने वार्त्रघ्नीप्रसक्तेरमावास्यायां च पूर्णमासविकारा
नुष्ठाने वृधन्वतीप्रसक्तेः प्रकृतिवद्भावाद्वैरूप्यप्रसङ्गात्प्रधाने पौर्णमा
सी चामावास्या च नाज्यभागाविति पूर्वपक्षभाष्ये चाज्यभागयोः
पौर्णमास्यमावास्याशब्दवाच्यत्वनिषेधात्सिद्धान्ते पौर्णमास्यमावा-
स्याशब्दयोः प्रधानवाचित्वात् प्रधानकालाज्यभागलक्षणार्थव्यवस्थाया
द्व्यवस्थापक्षे ऽपि पौर्णमास्यादिप्रधानकालीनयोराज्यभागयोर्वार्त्र-
घ्न्यावमावास्यादिप्रधानकालीनयोर्वृधन्वत्याविति प्रधानयागद्वा-
रैव व्यवस्थाया वाच्यत्वात्पक्षद्वये ऽप्यनुवाक्याभिः प्रधानयागाना
सङ्गतिरित्याशयः । विस्तरेण चास्माभिस्तन्त्रसारे ऽनयोः पौर्णमा
स्यमावास्याशब्दयोरभिमर्शनमन्त्रविधायिवाक्यस्थपौर्णमास्यमावा-
मास्याशब्दवत्प्राधान्यवाचित्वोपपादिता शक्यते च कालोक्ति
पौर्णमास्यमावास्याशब्दवाच्यप्रधानलक्षितकालविषयतया व्या-
ख्यातुम् । साधारण्यमात्र सन्देहापादकत्वमस्तिकमपि व्यवस्थापक्ष
ऽप्याज्यभागयोः साक्षात्कालानन्वयेन प्रधानद्वाराज्यभागकालस्य
लक्षणीयत्वात्पौर्णमास्यमावास्याशब्दयोः पक्षद्वये ऽपि प्रधानवाचि-
त्वसाधारण्यात्किं कर्मलक्षिताभ्याम् कालाभ्याम् अनुवाक्यानां
व्यवस्थाव्यवस्थापकलक्षण संयोग क्रमाभेदेव चाङ्गाङ्गलक्षण इ-
त्येव सन्दिग्ध संयोग इत्यत्र व्याख्येयम् । वारणवैकङ्कतपात्रा-
णां पूर्वानुमन्त्रणन्यायेनैवा कर्थसिद्ध गुणानां चेति सूत्रस्य प्र
धानविषयत्वानभ्युपगम इतरत्राधिकरणपूर्वपक्ष ऽपि योजयितु
वाक्यमिति सूचयितुमाह * गुणानां चेति * पूर्वपक्षोपसंहार
पूर्वं सिद्धान्तसूत्रमवतारयति * तस्मादिति * सूत्रं साध्यान
भिधानात्पूर्वसूत्रस्थासंयुक्तपदानुषङ्गेण साध्याकाङ्क्षा पूरय-
न्व्याचष्टे * मिथश्चेति * पुरो ऽनुवाक्यामन्वाहेति विवक्षितैकत्व
षष्ठत्वेनानुवाक्यालक्षणानां मिथो युग्मभूतानां प्रधाने सह दं-
पत्याधिकारवत्स्वकार्यरूपार्थद्वारसम्बन्धाभावादित्यर्थः द्विशब्दार्थं च
प्रदर्शनात्तदर्थेन सूत्रं व्याख्यानमपि । पूर्वसूत्रोक्तसम्बन्धानुप
पत्त्यर्थं सोमशब्द । पूर्वसूत्रोपेतत्वाधिकरणपूर्वपक्षकरणे स्व
धाद्वश्च सत्त्वात् इतिवत्पूर्वपक्षनिरसनम् । यार्थप्राप्त पद-
नुवाक्यालक्षणानां गुणानां प्रधाने सहोपकारे सम्बन्धाभावाप
पादनार्थत्वेन मिथ शब्दं व्याख्यातुमाह * न त्वर्थादिति * विन्य-
स्तमन्त्रपाठे ऽप्यनुवाक्याद्वयापत्तिमाशङ्क्य यद्यनुवाक्य इति व-

दिह द्वित्वविद्धाभावादनेकार्थविधिगौरवापत्तेश्च तेनैव द्वित्वविध्य-योगात्रानुवाक्याद्वयोपपत्तिरिति परिहारसूचनार्थं कथं च नेत्युक्तम। कर्मद्वये तद्दनुवाक्याद्वयं भविष्यतीत्याशङ्क्याह*द्वयोरपि चेति * ए-तदेवोपपादयितुमारभते * अमावास्यायां तावदिति * पौर्ण-मास्यामग्नीषोमीये सोमस्यापि देवतात्वात्सौमी विद्यमाना-यां भविष्यतीत्याशङ्क्याह * पौर्णमास्यामपीति * एवं तर्ह्येकस्त्रेवल्ये कर्मण्यनपेक्षितत्वादनुवाक्याद्वित्वविध्ययोगे ऽप्य-ग्नीषोमीये ऽपेक्षितत्वात् द्वित्वविध्युपपत्तेर्द्वयोर्वाक्ययोः स-मुच्चयेन प्रयोगो भविष्यतीत्याशङ्क्याह * न चेति * श्रुतैकसंख्यावि-रोधान्न सामर्थ्यतो ऽनुवाक्याद्वयसमुच्चयो नापि विधितो वाक्यभे-दापत्तेरित्याशयः । नन्वाज्यभागयोरपि मन्त्रविशेषस्य कालस्य च विधानात्तुल्यो वाक्यभेद इत्याशङ्क्याह *आज्यभागयोस्त्विति* लि-ङ्गक्रमाभ्यामेव मन्त्रविशेषप्राप्तेर्न्यायप्राप्तप्रधानकालद्वारा ऽवयवा-र्थसंयोगे वाक्यभेदापत्तिरित्याशयः । सिद्धान्तमुपसंहरति * त-स्मादिति * अङ्गाङ्गिकल्पनमपेक्ष्य प्रधानकालद्वारव्यवस्थार्थः संयोगो न्याय इत्युक्ते प्रधानवाचिनोः पौर्णमास्यमावास्याशब्दयोः । काललक्षणार्थत्वापत्तेरन्याय्यतामाशङ्क्य कालयोगेनैव प्रधानानां पौर्णमास्यमावास्याशब्दवाच्यत्वात्तस्य च कालस्य साक्षादाज्य-भागमन्त्रव्यवस्थापकत्वायोगात्प्रधानान्वयपूर्वव्यवस्थाभ्युपगमेन प्र-धानान्वयिरूपलक्षणापत्तावपि स्वरूपेण वाच्यत्वात्पूर्वप्रतीतेरदोष इति पूर्वेद्यन्तेनोक्तम् ।

मुष्टिकरणादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम् ॥ १४ ॥

## आनन्तर्यमचोदना ॥ २४ ॥

प्रधानान्वये ऽनुवाक्यानामानर्थक्यापत्तेस्तदङ्गभूतयोराज्यभा-गयोः क्रमानुसारेणावत्तः येत्त्या वारणाधिकरणायोदितानर्थक्य-तदङ्गावतारोज्जीवने कृते मुष्टिकरणस्याङ्गुलिविसर्जनोत्तरकाल प्रधानान्वयायोगाद्वाग्यमस्य च वाग्विसर्गोत्तरप्रधानान्वयायोगा-द्धस्तावनेजनस्य च हस्तलेपापादकपिण्डकरणोत्तरकालप्रधाना-न्वयायोगाद्वाग्यमस्य च वाग्विसर्गोत्तरप्रधानान्वयेनान्वयायो-गादहस्तावनेजनस्य च हस्तलेपापादकरणस्याङ्गुलिविसर्जनप्राग्भा-विषु ज्योतिष्टोमाङ्गभूतेषु वाग्यमस्य च वाग्विसर्गप्राग्भाविषु हस्ता-वनेजनस्य च दर्शपूर्णमासाङ्गभूतेषु पिण्डकरणप्राग्भाविषु पदार्थे-

( १ ) अवशानावाधनात् १० २ पु० पा० ।

ऽवतारप्राप्तायानन्तर्यलक्षणक्रमानुसारान्मुष्टिकरणवाग्यमयोर्दीक्षि-
तावेदनमात्रे हस्तावनेजनस्य चोत्करांजिनस्तरणमात्रे ऽवतारः क्रमा-
नादराद्वा सर्वेष्वङ्गुलिविसर्जनप्राग्भाविषु मुष्टिकरणस्य सर्वेषु च
वाग्विसर्गप्राग्भाविषु वाग्यमस्य हस्तावनेजनस्य च सर्वेषु पिण्ड-
करणप्राग्भाविष्ववतार इति विचारस्यापवादत्वेनानन्तरसङ्गतिमाह
*क्रमेति* क्रमस्यैककर्तृकपदार्थविषयत्वान्मुष्टिकरणवाग्यमयोर्भिन्न-
कर्तृकणावेदनेन क्रमानुपपत्तेः क्रमेणावेदनाङ्गत्वपूर्वपक्षायोगात्सन्दे-
५७। हमाक्षिपति * मुष्ट्योरिति * मयोरङ्गत्वेनावेदने ऽपि
यजमानस्य कर्तृत्वाद्यमदीक्षिष्टेत्यावेदने वा क्रियमा-
णे यद्दीक्षिष्याहं दीक्षितो ऽस्मि तस्मादयद्यं समा-
पनीयो ज्योतिष्टोमः मयेत्येवमध्यवसानरूपं कर्म तस्य मुष्टिकरणवा-
ग्यमसमानकर्तृत्वोपपत्तेः तदङ्गत्वपूर्वपक्षसम्भवात्सन्देह समाध-
त्ते * नेव इति * एवमप्यानन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वे
तस्य पूर्वोत्तरयोः पदार्थयोस्तुल्यत्वात्पूर्वस्यैवोत्तराङ्गत्वन्नोत्तरस्य
पूर्वाङ्गतेति नियमायोगान्मुष्टिकरणादेः पूर्वमपि कृष्णाजिनाच्छादना-
दिपदार्थं प्रत्यङ्गत्वोपपत्तेः परमावेदनायैव प्रत्यङ्गतेति पूर्वपक्षो न
युक्त इत्याशङ्कते * कस्मात्पुनरिति * आवेदनोत्करास्तरणयो-
स्तु प्रकरणावगतप्रधानान्वयोपपत्तेस्तदङ्गावतारासम्भवेन प्रकरणवि-
रोधपरिहारायोगाच्च क्रमेण पूर्वपदार्थाङ्गत्वं शङ्कितुं शक्यम् । मुष्टिक-
रणादेः कृष्णाजिनाच्छादनाद्यङ्गतापि पूर्वपक्षिणो ऽभिमता । पूर्वस्य प-
राङ्गत्वोपादानन्त्वनियमप्रदर्शनार्थमेव । हस्तावनेजनस्य तु तन्त्रप्रक्र-
मसान्निध्येन प्राधस्त्यात्पूर्वेषु कृतपदार्थाङ्गत्वानुपपत्तेः पराङ्गत्वोपादा-
नं युक्तमेवेति परिहरति *अनियमेति* यद्वा न केवलं हस्तावनेजनस्य
नियमेन पराङ्गत्वं किन्तु मुष्टिकरणवाग्यमयोर्लिङ्गेन मनःसमाधाना-
र्थत्वेन हस्तावनेजनस्य च हस्तशुद्ध्यर्थत्वेन कर्माङ्गत्वावसायात्सर्वासु
मुष्टिकरणवाग्यमहस्तावनेजनभावनासु किमित्यंशेन मनःप्रणिधान-
हस्तशुद्ध्युपकार्योत्तरकालानुष्ठेयपदार्थापेक्षोत्पत्तेः पूर्वानुष्ठितपदार्था-
नपेक्षणात् मुष्टिकरणवाग्यमाभ्यां किन्नु मोपकर्तव्यमित्यपेक्षिते दी-
क्षितावेदनोपकारार्थत्वावसायान्मुष्टिकरणवाग्यमयोरपि नियमेन प-
राङ्गतेति परिहारान्तरमाह * अथ चेति * पूर्वानुष्ठितस्यापि पदा-
र्थस्याश्रद्धाहेतुवैगुण्यपरिहारायाविस्मृत्यै मनसः समाधानोपकारा-
र्थत्वेनापेक्षोपपत्तिमाशङ्क्योत्तरकालानुष्ठेयपदार्थापेक्षोपपत्तेः प्रथमो-
क्त्या बलीयस्तोक्ता । एवं तर्ह्युत्तरकालानुष्ठेयसर्वपदार्थाङ्गतापत्ते-
रित्याशङ्क्य सर्वेष्वित्युक्तम् । पुरस्ताच्छब्दस्याप्रचाचित्वादनन्तरं पश्चादुच्य-

रितस्य ग्रन्थक्रमानुसारेण पूर्वालोचनासम्भावाङ्गतैव युक्तेत्याशयः । प्रकृतोदाहरणानादरेण तु सर्वभावनासु किम्भावापेक्षायाः पूर्वोत्पत्तेः पश्चादुच्चारितस्य वाक्यस्य उच्चारितात्पूर्वालोचनात्पराङ्गता युक्तेति व्याख्याऽनुयाजादीनामप्यनेन न्यायेन प्राग्भाव्यप्रयाजनङ्गत्वापत्तेर-निष्टापादकत्वादयुक्ता । एवं सत्यपि यथावेदनमपि मनःप्रणिधाना-र्थे स्यात्ततो मनःप्रणिधानार्थमुष्टिकरणसाध्यत्वे योग्यत्वाभावाद्ग्रन्थ-मयवदतिक्रम्येत न त्वेतदस्तीत्याह * न चेति * लिङ्गयोजनता ऽतिक्र-महेतुर्भविष्यतीत्याशङ्क्याह * शक्यते चेति * सर्वोदाहरणसाधार-ण्यमस्य प्रकटयितुं हस्तावनेजने ऽप्येतन्न्यायमतिदिशति * एवमि-ति * उलपराजिशब्दं व्याख्यातुमाह * ऊर्ध्वैरिति * उत्पूर्वस्य लुनातेः क्यन्प्रत्यये धात्वन्तोपसर्गान्तयोर्लोपनिपातनात्ककारनकारयोश्चैतत्सं-ज्ञत्वेन लोपादुलपशब्दस्योर्ध्वलवनार्हसुगन्ध्यादिकठिनतृणवाचि-तोर्ध्वशब्देनोक्ता । तृतीययोलपैः कृता राजिरित्यर्थे तृतीयासमासो दर्शितः । रेखापरपर्यायराज्याकारत्ववाचितया राजिशब्दं व्याख्यातुं दीर्घमित्युक्तम् । ननु पाठसादेश्यलक्षणस्या ऽनुष्ठानसादेश्यलक्षण-स्य वा क्रमस्य प्रकरणादिकल्पनद्वारा विनियोजकत्वं युक्तम् । आन-न्तर्यलक्षणस्य तु क्रमस्य बहुषु पठितव्येष्ववर्जनीयतयोभयाकाङ्क्षा-दिरूपप्रकरणाद्यभावे ऽप्युपपत्तेस्तत्कल्पनायोगान्न विनियोजकता युक्तेत्याशङ्क्य सन्निधिविशेषाम्नानार्थवत्त्वाय प्रकरणादिकल्पनस्यान-न्तर्ये ऽपि तुल्यत्वाद्विनियोजकत्वं सम्भवतीति सूचयितुमाह * सर्वत्र चेति * योग्यार्थं लिङ्गं प्रकरणवाक्यकल्प्यत्वात्पश्चाद्वाच्य-मप्ययोग्यस्यानन्तर्ये ऽप्यन्वयायोगाद्योग्यतायाः प्राधान्यसूचनार्थ-मात्रायुक्तम्। आनन्तर्येणानन्तरभूतयोरेव पदार्थविशेषयोरन्योन्याका-ङ्क्षाकल्पनादयान्तरेऽयुक्त । यथा पाठसादेश्यलक्षणे अनुष्ठानसादे-श्यलक्षणे वा क्रमे लिङ्गादीनि कल्प्यन्ते तथानन्तर्यलक्षणे ऽपीति सर्व-त्रेत्यनेनोक्तम् । प्रत्यक्षमहाप्रकरणाविरोधेन क्रमस्यावान्तरप्रकर-णादिकल्पकत्वायोगमाशङ्क्याङ्गुलिविसर्जनाद्युत्तरकाले प्रधाने महा-प्रकरणेन मुष्टिकरणादिविनियोगाद्यत्के. प्रधानप्रकरणस्य च प्रधा-ने निरपेक्षे ऽङ्गविनियोजकत्वायोगात्तद्विरोधाभावेन क्रमस्य प्रकर-णादिकरणादिकल्पनप्रतिबन्धानुपपत्तेः कल्पितस्या ऽपि प्रकरणादेः कल्पितश्रुतिपरम्परामाण्याविरोधसूचनार्थं महाप्रकरणादित्युक्तम् । महाप्रकरणेन क्रमबाधमाशङ्क्य बलवद्योग्यत्वाद्यनुग्रहं बाधा-योगोक्त्यर्थतया त्वेतद्ग्रन्थव्याख्याक्रम विनानवगतस्य योग्यत्वादेः

(१) पक्षपाते प्रधाने इ० २ पु० पा० ।

क्रमानुग्राहकत्वायोगान्महाप्रकरणस्य चाव विनियोजकत्वायोगाद्
बाधकत्वा ऽनुपपत्तिरयुक्ता । तस्मात्प्रामाण्याविशेषसूचनायैव ब-
लीयस्त्वोक्तिः । पूर्वपक्षमुपसंहरति * तस्मादिति * मुष्टिकर-
णस्य तदनन्तरवाक्यमाङ्गता कस्मान्न पूर्वपक्षितेत्याशङ्क्याह * यो-
ग्यत्वेति * पूर्वोक्तायां सर्वसाधनासु किमित्युपकारापेक्षणमि-
त्यत्रैव वार्त्तिके निरस्तत्वाद्वाक्यमस्य मुष्टिकरणाङ्गत्ववन्मुष्टिकर-
णस्य वाक्यमाङ्गताप्यनाशङ्कनीयेति दृष्टान्तदार्ष्टान्तिकभावार्थः
परस्परशब्दः । अनन्तरवाक्यमतिक्रमात्तद्विधेयनोत्तरपदार्थाङ्गता
ऽपि मुष्टिकरणस्य कस्मान्न स्यादित्याशङ्क्याह * तेनेति * एकाङ्गाव-
तारमात्रेण प्रकरणाम्नानामर्थैक्यपरिहारार्थैकान्तरितस्या ऽपि च
द्व्यन्तरिताद्यपेक्षया सन्निधानानपायात्कारणं च विना सन्निहितानि
क्रमायोगादित्याशयः । बहुषु पठितेषु कस्य चिन्मानन्तर्यस्यावर्जनी-
यत्वादनुष्ठानक्रमार्थत्वेन च तत्सन्निधिविशेषाम्नानार्थवत्त्वोपपत्तेः
उभयाकाङ्क्षाविरूपप्रकरणादिकल्पकत्वायोगाच्छ्रुतिवच्च क्रमस्य
साक्षाद्विनियोजकत्वाभावादानन्तर्यमङ्गाङ्गिसम्बन्धस्यानाक्षेपकमि-
त्येव धूम इत्यनेन सूत्रार्थं सूचयन्सिद्धान्तमुपक्रमते एवमिति *
सर्वैरिति भाष्येण मुष्टिकरणाङ्गुलिविसर्जनान्तरालवर्त्तिभिः सर्वैर्मु-
ष्टिकरणस्य वाक्यमवाधिमगान्तरालवर्त्तिभिर्वाक्यमस्य हस्तावनेजन-
पिण्डकरणान्तरालवर्त्तिभिर्हस्तावनेजनस्यान्वय इति प्रतिज्ञाते वा-
क्यभेदो हेतुरथेनोक्तः स वाक्येन पूर्वपक्षाकरणात् क्रमकल्प्यवाक्या-
सम्भवार्थत्वे तु वाक्यभेदोक्तेः प्रकरणाद्यसम्भवस्या ऽपि वाक्य-
स्यानुक्त्या न्यूनत्वापत्तेरयुक्त इत्याशङ्क्य क्रमकल्प्यस्यैप्रकरणा-
द्यसम्भवार्थत्वे तु वाक्यभेदोक्तेः प्रकरणाद्यसम्भवस्या ऽपि वाक्य-
स्या ऽनुक्त्या न्यूनत्वाय न तेषां परस्परेण कश्चित्सम्बन्धो ऽस्तीति भाष्ये-
कवाक्यत्वादिक्रमनिरासेन सूचितमिति । अर्थैकत्वस्याभिधानादित्या-
दिभाष्येण क्रमकल्प्यैकवाक्यत्वाद्यसम्भवे ऽभिहिते प्रत्यक्षमप्येकवा-
क्यत्वाद्यनेन निरस्तमित्याशङ्कमानं प्रति न च पदार्थाकाङ्क्षया-
मित्यनेनानन्तर्यमात्रेणाकाङ्क्षारूपप्रकरणकल्पनाशक्तेः प्रकरणाक-
रणकल्पनानिरपेक्षेण कर्मैकवाक्यत्वकल्पनाशक्ते कल्प्यस्या-
प्येकवाक्यत्वादेरसम्भवः स्पष्टीकृत इति सूचनार्थं नार्थं दृश्यत
इत्युक्तम् । एकवाक्यत्वादर्शनमुपपादयति * न हीति * बलीय-
स्त्वसूचितप्रामाण्याविशेषेणान्तरामाय्यैकवाक्यत्वादेः कल्पनासम्भ-
वेनाकल्पितत्वादप्रामाण्यं न कल्प्यत्वमात्रेणेति सूचयितुं यदित्यु-
क्तम् । योग्यता समत्वकारणमप विना तावद्व्याचष्टे * योग्यता

पुनरिति * असमेत्यकारप्रश्लेषेण व्याचष्टे * यद्वेति * उत्तरार्द्धं व्याचष्टे * न चेति * यदि व्याख्यातान्तरं कथं मात्ये भवेत् ततः कर्त्तव्यत्वेनावगतस्येति कर्त्तव्याकाङ्क्षात्मककथंभावोत्पत्तेः पूर्वपदार्थभावनांशपर्यालोचनकाले ऽनन्तरस्य कर्त्तव्यत्वानवगमात्पूर्वस्यैव कथंभावो भवेत्ततश्चोत्तरमेव पूर्वस्याङ्गं प्राप्नोतीत्यनिष्टापत्तिमाह * यदीति * अस्तूत्तरं पूर्वाङ्गं तथा ऽपि सिद्धान्तासिद्धेः ७५८। कानिष्टापत्तिरित्याशङ्क्याह * न चेति * अनेनेदं साध्यमित्यवगते कथं भावोत्पत्तेः साध्यांशेऽशापूरणात्कथं भावोत्पत्त्ययोगान्नोत्तरं पूर्वाङ्गं भवितुमर्हतीत्याशयः। पूर्वपदार्थभावनांशपर्यालोचनवेलायामुत्तरपदार्थकर्त्तव्यत्वानवगमे ऽप्युत्तरपदार्थभावनांशपर्यालोचनवेलायामुत्तरेण पूर्वस्य साध्यांशपूरणात्पूर्वस्योत्तराङ्गतैव पूर्वपक्ष्यभिमता सेत्स्यतीत्याशङ्क्याह * न चोत्तरेणेति * आवेदनात्तरेण पदार्थेनावेदनस्य साध्यांशपूरणात् फलसमर्पणस्थेन मुष्टिकरणसाध्यांशपूरकत्वं भविष्यतीत्याशङ्क्याह * एवमिति * अतः प्रधानात्प्राचीनेन केनचित्पदार्थेन साध्यांशपूरणाशक्तः सर्वमङ्गं प्रधानपर्यन्तं प्राप्तं न त्वन्तराले पर्यवस्यतीत्याह * इतीति * नन्वफलसमर्पणनावस्थत्वेनोत्तरस्य पूर्वसाध्यांशपूरणाशक्तौ गोदोहनादेः फलसमर्पणत्वेन साध्यांशपूरणाशक्तत्वात्सर्वेषां पूर्वाङ्गानाङ्गोदोहनाद्यङ्गत्वापत्तेः सर्वाङ्गानां यावत्प्रधानं प्राप्त्युक्तिरयुक्तेत्याशङ्क्यते * यदीति * महाप्रकरणगम्यप्रधानाङ्गत्वस्यावान्तरप्रकरणगम्येन गुणकामाङ्गत्वेन बाधो ऽवान्तरेत्यनेनोक्तः। सन्दंशं विनावान्तरकथम्भावानिष्पत्तेः गुणकामाङ्गत्वानुपपत्तिरिति परिहरति * उच्यत इति * श्रुतिलिङ्गे ऽपि वाक्योपलक्षितं गुणकामस्य प्रयोजनवत्त्वात्सन्दंशं विनापि प्रधानग-

म्भावस्य मुष्टिकरणादेः श्रुत्याद्यगवगतप्रधानगुणसन्दंशान्तरालवर्त्तित्वाभावात्प्रधानकथंभावेन ग्रहणं न स्यादित्याशङ्कानिरासायावान्तरविशेषप्राफलन्दर्शयितुमाह * प्रभृतेति * अनन्तरेण सम्बन्धः स्यात्परस्याप्यनन्तरस्तदारूढः पुनः पश्चाच्चानन्तर्यमस्तु न इत्युपङ्गाधिकरणन्यायेनाङ्गान्तरव्यवधायकत्वाभावात्कथं भावविच्छेदबुद्धिपर्यन्तं सर्वाण्यङ्गानि प्रधानकथम्भावेन सङ्गच्छन्तीत्युक्ते पाश्चा-

स्याङ्गगमनेऽपि कथम्भावस्य यदि भवेत्पूर्वस्य कथम्भाव इति वार्त्तिको-
क्तेन न्यायेनाधस्तनाङ्गागमनान्मुष्टिकरणादेः प्रधानकथम्भावेनाग्रह-
णं स्यादित्याशङ्क्य फलवत्सन्निधावफलान्तस्य प्रधानकथम्भाव
ग्रहणहेतोरुत्तराङ्गवत्पूर्वाङ्गेष्वविशेषात्प्रधानात्प्राक्पश्चाच्चोभयतः कथ-
म्भावगमनमभितोऽपीत्यनेनोक्तम्। गोदोहनवद्योपसदादीनामपि
तर्हि कथंभावेनाग्रहणं स्यादित्याशङ्कान्येत्युक्तम्। प्रधानकथम्भा-
वस्याभितो गमनेऽङ्गगुणस्य कस्यचिदसम्भवात्सन्दंशानुपपत्तेर्न
कश्चिदर्थान्तरप्रकरणं स्यादित्याशङ्क्य *नन्विति* बलवता प्रमाणेन प्र-
धानकथम्भावं बाधित्वाङ्गगुणत्वावगमे सन्दंशसम्भवेन परिहरति *
उच्यत इति* पुनःशब्दस्य पश्चाद्भावार्थत्वाच्चकारेण च प्राग्भावसू-
चनाच्छ्रुत्यादिभिः प्राक्पश्चाच्चान्यप्रकरणस्थानामङ्गानामङ्गे ज्ञाते स-
न्दंशसम्भवादर्थान्तरप्रकरणमित्यतस्त्वर्थः। सर्वेषां चार्थान्तरप्रकर-
णित्वेनाभिमतानां श्रुत्यादिभिः प्राक्तदङ्गमुक्त्वा पश्चादपि तदङ्गपराम-
र्शसद्भावान्न कश्चित्सन्दंशाभावः शङ्कनीय इत्याह * सर्वेषां हीति *
किमर्थं सन्दंशापेक्षेत्याशङ्क्यार्थान्तरप्रकरणोपक्रमसमाप्तिमर्यादाव-
धारणार्थतामाह * तात्पर्येणेति * अतः सन्दंशाभावेनावेदनादेः प्र-
त्यक्षार्थान्तरप्रकरणाभावादानन्तर्येण चार्थान्तरप्रकरणायोगान्मुष्टि-
करणादेः प्रधानार्थत्वद्वारा तदङ्गाङ्गत्वसिद्धिरिति सूचयितुमाह *
यत्र त्विति * पुनःशब्देन प्राक्त्वस्याप्युपलक्षणार्थत्वं प्राक्पश्चाच्छ्रु-
त्यादिभिः तदङ्गकीर्तनं नास्तीत्यर्थः। प्रधानार्थत्वाध्यवसाने सति त-
दङ्गाङ्गत्वसिद्धिः कथमित्याशङ्क्य तत्सूचनार्थमाह * तस्य त्विति *
अङ्गाङ्गस्य प्रधानानुपकारित्वे प्रधानार्थत्वावेदकस्य प्रकरणस्यात्य-
न्तबाधापत्तेः प्रकृतापूर्वसाधनत्वलक्षणाद्धेत्वभावात्स्वरूपार्थत्वे नैष्फ-
ल्यापत्तेर्बलीयसापि वाक्यादिनाङ्गाङ्गत्वस्यावगन्तुमशक्यत्वाद्व्री-
ह्यादिकेवलस्य प्रधानस्याङ्गसाङ्गस्य वेति चिन्तानुपपत्तिप्रसङ्गेनाङ्गा-
ङ्गस्यापि प्रधानोपकारित्वावसायात्प्रकरणावगतसाक्षात्प्रधानार्थत्वा-
सम्भवेऽङ्गाङ्गत्वेनापि प्रकरणानुग्रहसिद्धौ प्रधानार्थत्वे सत्यङ्गावता-
रन्यायादङ्गाङ्गत्वं सेत्स्यतीत्याशयः। ननु प्रकरणावगतप्रधानार्थ-
त्वस्य मुष्टिकरणादेरङ्गावतारन्यायादङ्गाङ्गत्वे सत्येकाङ्गावतारमात्रे-
ण प्रकरणाम्नानानर्थक्यपरिहारादनेकेष्वङ्गेष्ववतारकल्पनानुपपत्ते-
रेकस्मिन्नेवाङ्गेऽवतारस्योचितत्वादानन्तर्यविशेषाच्च विशेषावधा-
रणोपपत्तेरावेदनादिमात्रेऽवतारावसायाच्च सिद्धान्तसिद्धिः स्यादि-
त्याशङ्क्य मुष्टिकरणादेर्लिङ्गेन प्रयोगाङ्गभूतकर्तृसंस्कारार्थत्वावसाया-
त्प्रयोगस्य च साङ्गप्रधानविषयत्वात्सौमिकवदियत्साङ्गप्रधानार्थ-

त्वस्यैवावगतेर्वस्तुतो न प्रधानार्थस्याङ्गेऽवतारः प्रयोगस्य तु साक्षादङ्गविषयत्वाभावेन न प्रधानद्वाराङ्गविषयत्वात्प्रयोगद्वाराङ्गप्रधानार्थत्वस्याङ्गस्य प्रधाननैरपेक्ष्येणाङ्गान्वयायोगमभिप्रेत्य प्रकरणाविरोधे क्रमेण पूर्वपक्षायोगात्प्रकरणस्य स्वरसभङ्गार्थाश्चान्ताया आनर्थक्यतदङ्गावतारप्रकरणसङ्गतिसिद्ध्यर्थमौपचारिकयवतारोक्तिरित्यविरोध इति सूचयितुमाह * तदिहेति * साङ्गोक्त्याङ्गानां प्रधानविशेषणत्वेन साक्षान्मुष्टिकरणाद्यन्वयाभावसूचनान्मुष्टिकरणादेः प्रधानद्वाराङ्गान्वयः सूचितः । योग्यतोक्त्या प्रयोगाङ्गभूतकर्तृप्रारब्धलक्षणोपपात्तिघन्मुष्टिकरणस्याङ्गुलिविसर्गोत्तरभाविषु वाग्यमनस्य च पाणिविसर्गोत्तरभाविषु हस्तावनेजनस्य च हस्तलेपापादकपिण्डकरणोत्तरपदार्थेष्वयोग्यत्वात्कृष्णविषाणग्रहणकालप्रास्तनान्तरालवर्त्तिषु पदार्थेषु कृष्णविषाणकण्डूयनवन्मुष्टिकरणाङ्गुलिविसर्गाद्यन्तरालवर्त्तिनामेवाङ्गानां मुष्टिकरणाद्यङ्गमित्यपि सूचितम् । तुमुन्प्रत्ययाभावेनैकवाक्यत्वनिरासार्थं नहीत्यादिभाष्यं व्याख्यातुमाह * यदि स्विति * तस्मादित्युपसंहारभाष्यं व्याचष्टे * तस्मादिति *

## वाक्यानां च समासत्वात् ॥ २५ ॥

पूर्वसूत्रेणानन्तर्यस्य प्रकरणाद्येकत्वेनाविनियोजकतोक्ता प्रकरणाविरोधेनाविनियोजकत्वोक्त्यर्थमथेतत्सूत्रमिति सूचयितुमाह *इतश्चेति* क्षिपतिवाद्यत्योः प्रकरणवाचित्वेनैकार्थ्यो भूमो ऽप्रेराक्षेपक इत्यादौ च क्षिपतेः प्रामाण्ये प्रयोगादर्शनात्तत्समानार्थस्य चोदयतेरपि प्रामाण्यवाचित्वस्यानवगमाद्वचोदनाशब्दोऽप्रामाण्यवाचित्वेन व्याचष्टे । आनन्तर्यबाधकस्य वाक्यैकवाक्यत्वरूपस्य प्रकरणस्य वाक्यं बाधकं स्यान्नचात्र तदस्तीत्येतदर्थोक्त्यर्थत्वेन वाक्यसमाप्त्युक्तिं व्याचष्टे यत इत्युक्तम् । प्रत्येकोक्त्या प्रकरणेन क्रमबाधः प्रकरणस्य च वाक्येन बाधो न समस्तेष्वित्यनेन सूचितः । वाक्यभेदादित्यादिभाष्येण पूर्वसूत्रे एकवाक्यत्वानिरासादद्वैकवाक्यत्वनिरासः पुनरुक्त इत्याशङ्क्य संहत्यैकार्थत्वाभावेन तत्रैकवाक्यता निरस्ता विभज्यमानसाकाङ्क्षत्वाभावेनात्रेति विवेकं सूचयितुमाह * तस्मादपीति * एकवाक्यस्थानां पदानामन्योन्यसाहित्यं विना प्रयोजनरूपार्थाभावेनान्योन्यसहितानामर्थो यस्मिन्नेकवाक्ये तदन्योन्यार्थमिति मध्यमपदलोपिना समासेनैकवाक्यतोक्तेस्तस्मात्पूर्वसूत्रोक्तात्संहत्यैकार्थस्वरूपैकवाक्यत्वलक्षणादर्पणाद्विभज्यमानसाकाङ्क्षत्वरू-

७५२।

पैकवाक्यत्वलक्षणादर्शनादपि नैकवाक्यत्वमित्यर्थः ।

चतुर्थाधिकरणस्याग्नेयमात्राङ्गत्वाधिकरणम् ॥ १५ ॥

## शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥

चमसाधिकरणे महत्स्वेव सम्मार्गो न चमसेष्वित्युक्तं तत्प्रसङ्गात्सदसदसारतिता षोडशिपात्रे निविशते यूपे वेति चिन्तायामानन्तर्यात्सदस्येवेत्यनेन यूपाविरोधे अभिहिते अभिक्रमणापवादाधिकरणाद्यां क्रमावसाराविरोधे अभिहिते धारणाधिकरणादिनस्याङ्गावनारम्भां ऽनुवाक्याधिकरणेनोऽङ्गीयत्वाद्वाक्यविरोधे क्रमस्य परिहृते मुष्टिकरणादेरथ विरोधिना क्रमेण विनियोगमाशङ्क्यानन्तर्यरूपक्रमस्यानन्तर्याधिकरणताविनियोजकत्वोक्त्वा चमसाधिकरणप्रसङ्गागतविचारेण समाप्तत्वसक्त्या यो विचारस्तस्समाप्तौ स एव बुद्धिस्थो भवतीति बुद्धिस्थचमसाधिकरणप्रसङ्गनास्य सङ्गतिं सूचयितुमाह * यथा संयोगमिति * अनन्तराधिकरणोक्तसर्वाधिकारापवादाद्यनन्तराधिकरणेनैव सङ्गतिमभिप्रेतां स्पष्टत्वादनुक्त्वा चमसाधिकरणोक्तयथासंयोगव्यवस्थाविरोधात्पूर्वपक्षायोगेन सन्देहायोगशङ्कानिरासायाविरोधोक्त्यर्थो ऽयं ग्रन्थः । धर्मान्वयिनो ऽपूर्वसाधनस्य यदाग्नेयशब्देन केवलाग्नेयेन्यस्य मुपलक्षणमुक्तं तस्य द्विदेवत्यं केवलाग्नेयान्यतद्विशेषद्वन्द्वात्मसमुदायात्मकस्य समस्तस्याभावात्समस्तेनोपलक्षणेनोपलक्षितस्य धर्मसंयोगाभ्युपगमे किं द्विदेवत्यस्याग्नेयशब्देन ग्रहणायोगात्कि समुदायैकदेशेनाप्यन्यतरस्यान्वयेनोपलक्षितस्य धर्मसंयोगः समस्तेनैव चोपलक्षितस्येति सन्देहात्किं द्विदेवत्यो गृह्यते न वेति विचार इत्यर्थः । पूर्वपक्षमाह * गृह्यते इति * तो ऽपि हीति भाष्योक्तं हेतुं व्याचष्टे * उपयते हीति * दृष्टान्तं व्याख्यातुं मनोताधिकरणभाष्यं पठति * यद्यपीति * ननु त्वं ह्यग्ने प्रथमो मनोतेति मन्त्रे वाचनिकविनियोगान्यथा ऽनुपपत्त्याग्निशब्दस्याग्नीषोमोपलक्षणार्थत्वं युक्तं तदितेन । देवतान्तरेणैवान्यभिधानाद् द्विदेवत्ये धाग्ने समवेतत्वे ऽपि देवतान्तराभावात्तोपलक्षणत्वं सम्भवतीत्याशङ्क्याह * समवेतश्च चेति * सर्वत्राग्निकल्पिकत्वं द्रव्यस्वरूपत्वयमाने ऽपि तद्धितस्पृष्टे प्रकरणाद्यन्यस्य सर्वार्थत्वस्याति मन्त्रोपपरिहारार्थं समवेतार्थमात्रस्यैदोपलक्षणताभ्युपगन्तव्या । एवं एकस्य शब्दस्यानेकार्थेरायांशस्य समात्रवाचित्व च

देवतात्वविशेषप्रतीत्ययोगाद्विशेषवाचित्वे तु लक्षणया सामान्य-
प्रतीतेर्दैवतात्वमेवाग्नेयशब्दवाच्यम् । तथा ऽप्यग्नेश्चतुर्धाकरणा-
ऽविधयकार्ययोग्यपूर्वसाधनद्रव्यविशेषोपलक्षणमात्रे पर्यवसा-
नाद्यागनिश्चायिव चतुर्धाकरणविधौ साक्षात्कार्ययोगित्वाभावेना-
त्यन्तानादरणीयत्वात्प्रकरणातिसङ्कोचपरिहारार्थं समवेतत्वमा-
त्रेणैवोपलक्षणता युक्तेत्याह * न चेति * एकपुरोडाशायां पौर्णमा-
स्यां पुरोडाशद्वयस्योपलक्षणस्याप्यांशुयाजाख्यकार्ये ऽनादरो ऽनपाय-
श्च कालस्य लक्षणं हि पुरोडाशाविति दशमान्त्याधिकरणसूत्रं व-
क्ष्यमाणो दृष्टान्त । पर्यग्निकृतं पात्नीवतमुत्सृजन्तीत्यत्रा ऽपि पात्नीव-
तशब्दस्य पशूपलक्षणार्थत्वात्तेनैवोपलक्षणत्वेन हेतुना त्वपुरस्तादुदः
पात्नीवते ऽनुपूर्वत्वाद्यच्छब्द इत्यत्रोक्त इति दृष्टान्तान्तरमाह *
नचेति * इत्थं वैदिकदृष्टान्तद्वयमुक्त्वा भाष्योक्त लौकिक दृष्टान्त-
मनुमन्यते *तथेति*उपलक्षणत्वे कार्ययोगित्वाभावोक्त्यर्थत्वेन मि-
थस्तेषामिति सूत्रावयव तच्छब्देन शेषशब्दोक्तस्य कार्यस्य गुणशब्दो-
क्तस्य चोपलक्षणस्य परामर्शः यद्गुपचत चानेकोदाहरणत्वोपलक्षण-
कार्ययद्भुत्वागमर्मभिप्रेत्य व्याख्यातुमाह *उपलक्षणेति* तद्धितवा-
च्यमुख्यदेवतात्वत्यागेन लाक्षणिकसमवेतत्वोपलक्षणत्वाभ्युपगम-
स्य प्रकरणातिसङ्कोचपरिहारार्थत्वेन तथा साधारणात्वा साधार-
णयविषयत्वेनापस्यापिनानामाग्नीषोमीयादीनामेकप्रकरणानन्वये
सति प्रकरणातिसङ्कोचानापत्तश्चैयस्या स्यासाधारणस्यैकप्रकरणान्व-
यात्साधारणधर्मकार्यप्रतीतदुपलक्षणार्थत्वेन तत्र श्रुत्यविरोधश्च-
स्मेन प्रकरणातिसङ्कोचायोगात्साधारण्येव युक्तेति व्यवधारणाक-
ल्पनया हेतूक्त्यर्थं सूत्रावयवव्याख्यानार्थं यदीत्यादिभाष्यमस्मिन्सू-
त्रे व्यवस्थावाचिशब्दाभावात्सिद्धान्तसूत्रव्यवस्थाशब्दान्वयेन [illegible] पू-
र्वसूत्रपूरणाभ्युपगम प्राथम्यात् व्यवस्थाशब्दोपेतस्यैव पूर्वपक्षसूत्र-
स्य पठनीयत्वापत्तरयुक्तमाशङ्क्यानन्तर्यमचोदनेत्यतत्सूत्रस्याचोद-
नाशब्दस्यागत्यातिरिक्तानाश्चतुर्धाकरणाचोदना स्यादित्येवं व्यवस्था-
याचितामभ्युपगम्यानुपङ्गेण पूर्वपक्षभाष्यकृतो ऽभिमतमित्याह *भा-
ष्येति * व्यवहितानुपङ्गायोगादनाक्षेपकत्वात्मकाकारणत्ववाचि-
नश्चाचोदनाशब्दस्यानुपङ्गे ऽप्यन्यार्थत्वायोगात्कार्ययोगित्वाभावेन
चोपलक्षणस्यानादत्यत्वानुक्तो प्रकरणानुरोधमात्रेण श्रुतिभङ्गायोगा-
दस्या व्याख्याया स्वानभिमतत्वसूचनार्थं भाष्यकारग्रहणम् । ल-
क्षणार्थो गुणश्चेतीरति सिद्धान्तसूत्रावयवस्यमाणचैपस्यावता-
राय यथा प्राशित्रावदानरूपः शेषो ऽग्निगुणसंयुक्तो ऽपि साधार-

ण इत्यावृत्त्या दृष्टान्ततया व्याख्यार्थं यथेत्यादिभाष्यं तात्पर्यतो व्याचष्टे * भवति चेति *

व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्ल-

क्षणार्था गुणश्रुतिः ॥ २७ ॥

यथा प्रहर्तृत्वेनोपलक्षणेन प्रहाणामेव संयोगात्सम्मार्गेऽव्यवस्थोक्ता तथाग्निदेवत्यस्वरूपेण तद्धितार्थेनैकदेवत्यस्यैव संयोगादनुवाकरणव्यवस्था युक्तेत्येवं सूत्रावयवव्याख्यार्थत्वमग्निनेति भाष्यस्य द्योतयितुमाह * यथैवहीति * दृष्टान्तोक्तैकदेवत्यस्वरूपाविवक्षाशङ्कानिरासप्रयोजनत्वं सूचयितुमाह * उद्दिश्यमानत्वादिति * द्विदेवत्यसंयोगनिरासार्थं समर्थतत्त्वमात्रस्योपलक्षणत्वनिरासायाभिधेयवाचिनार्थशब्देन तद्धितवाच्यस्य देवतात्वस्योपलक्षणतोक्तेति सूचयितुमाह * न चेति * नन्वसम्बद्धस्याग्नेरुपलक्षणत्वायोगात्सम्बन्धमात्रमपेक्षितत्वाद्ग्राह्यं तद्विशेषस्तु देवतात्वं तद्धितोक्तमनपेक्षितत्वाद्ग्राह्यमित्याशङ्का देवतात्वमेव प्रत्ययार्थत्वेन प्राधान्यादुपलक्ष्यं प्रकृत्यर्थत्वात्त्वग्निरुपलक्षणविशेषणमित्याह * अग्निः पुनरिति * पट्कर्तृकेऽपि सूत्रे प्रत्येकं कर्तृत्ववद्द्विदेवत्येऽप्यग्नेस्तावद्देवतात्वमस्त्येवंसत्याद्येन कुत इति पृष्टा तन्निरासार्थं यद्धीत्यादिभाष्यं तात्पर्यतो व्याचष्टे * याज्ञेति * एतदेवोपपादयति * नहीति * अतः कारणादग्नीषोमीय ऐन्द्राग्नो वा नाग्नेयशब्देनोच्यत इत्यर्थः । देवतात्वस्यासत्त्वामपि तद्धितेनोक्तौ तस्योपलक्षणमात्रार्थत्वात्प्रत्यन्तादरस्याग्न्युपलक्षणं विना धर्मान्वयिनोऽपूर्वसाधनविशेषस्योपलक्षयितुमशक्यत्वादग्न्युपलक्षणस्याप्यनादरो युक्त इत्येवं परिहारार्थत्वेन लिङ्गस्योपलक्षणस्यापि देवतात्वस्य तद्धितवाच्यत्वादर्थेन सामर्थ्येनोपलक्ष्यसम्बन्धोपपत्तेरित्येवं व्याख्यार्थं देवतालिङ्गस्य हीति भाष्यं व्याचष्टे * तद्धितार्थो ऽत्रेति * लिङ्गस्यार्थेनेति सामर्थ्यवाच्यर्थशब्दोक्ता निरपेक्षतार्थसंयोगार्थव्याख्यार्थं पूर्वभाष्ये ऽनागतावेक्षयोक्तेति निरपेक्षत्वया सूचयन् श्लोकं व्याचष्टे * आग्नेय इति * दृष्टान्ते प्राशित्रमवद्यतीति सामान्यवाक्येन हविर्भागत्वाविशेषावदाने प्राप्ते कस्मादपि प्रदेशात्प्राशित्रमवदेयमित्यपेक्षायां मस्तकादवयवप्रदेशविशेषोपलक्षणार्थोऽन्यत्वोपलक्षणश्रुतिरित्येवं वैपरीत्येनानुभाषणपूर्वमन्त्यसूत्रावयवव्याख्यार्थमपेत्याद्यनियम इत्यन्तं भाष्यं व्याख्यातुमाह * यदिवेति * मस्तकादिभागस्य भञ्जनस्फोटनादरप-

र्थायस्याग्नेयपुरोडाशविशेषे विधानार्थमेतद्वचनमिति वदता यदा-
ग्नेयस्येति प्राशित्रावदानार्थान्तरप्रकरणप्राप्तमाग्नेयात्प्राशित्रावदानम-
नूद्य तन्मस्तकं विभज्येति वचनव्यक्तिर्व्याख्याता । प्राशित्रमवद्यती-
ति सामान्यवाक्यात्प्राशित्रावदानस्य साधारण्यात् युक्तेऽयुक्तं चतु-
र्द्धाकरणस्यापि तं चतुर्द्धा कृत्वेति सामान्यवाक्यात्साधारण्यं शङ्कि-
तुमाह * स्थित इति * द्विदेवत्ये तद्धितार्थो न सम्भवतीत्येवमुक्ते- ७६।११
न न्यायेनाधिकरणे स्थिते ऽसौ चाविशेषादिति कात्यायनस्य वच-
नस्याप्यपवादप्रत्ययस्योपपद्यते इत्यर्थः । कतस्यापत्यङ्गोत्रमित्यस्मि-
न्नर्थे गर्गादिभ्यो यञिति यञं कृत्वा कात्यस्यापत्यं युवेत्यस्मिन्नर्थे
यञिञोश्चेति फक्प्रत्यये तस्य चायनादिसूत्रेणायनादेशे कृते कात्याय-
नस्येदमित्यस्मिन्नर्थे वृद्धाच्छ इति छप्रत्यये तस्येयादेशे नाजादित्वा-
त्फक्फिञोरन्यतरस्यामिति फक्प्रत्ययस्य लुक्पक्षे कात्य इति यकारा-
त्परतः छप्रत्ययप्राप्तावापत्यस्य च तद्धिते नातीति आकारादिव-
र्ज्जिते तद्धिते परेऽपत्यवाचिनो यकारस्य लोपात्कात्यीयमिति रूपसि-
द्धिः । न्यायविरोधात्कात्यायनीयवचनस्य बाधमाशङ्क्याबाधार्थं
श्रुतिमूलतामाह * उक्तमिति * इह दर्शपूर्णमासप्रकरणे श्रुति-
रित्यर्थः । कासौ श्रुतिरित्यपेक्षायां पठति तमिति । सामान्यश्रुतेर्वि-
शेषश्रुत्याग्नेयमात्रविषयत्वेनोपसंहारात्साधारण्यानापत्तिरिति परि-
हारमाह * अत्रेति * नित्योक्त्या ऽनुपसंहारे विकल्पापत्तिरुपसंहा-
रकारणत्वेन सूचिता । प्राशित्रवाक्ये व्याख्यातेन परपदार्थान्वयवि-
धौ श्रुतिबाधापत्तेर्विशिष्टावदानविधयवगमाद्विशेषशास्त्रत्वेन सा-
मान्यशास्त्रोपसंहारकत्वं भविष्यतीत्याशङ्क्य *प्राशित्रेति* वाक्या-
न्तरात्प्राप्तेः प्राशित्रावदानस्य विधातुमशक्यत्वात् गुणमात्रार्थत्वा-
वगतेर्विशिष्टावदानशास्त्रत्वाभावाच्चोपसंहारकत्वं सम्भवतीति परि-
हरति *नेति* एतदेव विवृणोति *मस्तकमिति* पुरोडाशवाक्यस्यापि
बर्हिःपत्वलक्षणगुणमात्रार्थत्वात्क्रममात्रार्थत्वाद्वा चतुर्द्धाकरणवि-
धायित्वाभावे ऽविशेषशास्त्रत्वाभावाच्चोपसंहार्यत्वं स्यादित्याशङ्क्या-
[illegible] * इदं त्विति * कृत्वाशब्दोक्तायां चतुर्द्धाकरणभावनायां गुणा-
श्रुतेराख्यातोक्तायाश्च बर्हिःपत्त्वकरणभावनायाः प्राधान्यप्रतीतेः
कृत्वाशब्दोक्तभावनाविशेषणत्वायोगाद्विधिर्गुणत्वोक्तिः । शाखान्तरी-

पस्याध्येतृभेदेन पुनर्वचनत्वस्य निरस्तत्वाच्छाखान्तरीयस्य च दूर-स्थत्वेन प्रत्यभिज्ञायोगात्स्वगुणश्रवणे ऽपि विधयैव क्रिया दूरस्थस्य प्रत्यभिज्ञाभ्युपगमे ऽपि त्वभ्यासेन क्रियाविधि॰ शक्यो वक्तुमिति प्रौ-ढिप्रदर्शनार्थो पुनर्वचनोक्तिः । शाखान्तरीयस्य सामान्यस्याधुक्तिस्थ-त्वेनोपसंहारायोगं शङ्कते * दूरस्थत्वादिति *

यस्य येनार्थसम्बन्धो दूरस्थेनापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणमिति ॥

न्यायाद् दूरस्थो ऽप्युपसंहारो नाशक्य इति परिहरति * नेति * पूर्वश्लोकेन सामान्यन्यायमुक्त्वा तदुपजीवनेन दूरस्थस्या ऽपि सा-मान्यस्य विशेषणोपसंहारसिद्धिमाह * तेनेति * येन कारणेन दूरस्थस्या ऽपि योग्यत्वात्सम्बन्धो युक्तस्तेन कारणेन दूरस्थमपि सा-मान्य विशेषेण विना ऽनुपपद्यमानत्वाच्छाखान्तरीयविशेषं प्रति ग-च्छति तत्रश्च श्रुतविशेषलाभे विशेषान्तरकल्पनायोगाद्विशेषशाखेण स्वविषयभूते विशेषे स्थाप्यते दूरस्थत्वे ऽपीति श्लोकार्थः । दूरस्थ-स्याप्युपसंहार्योपसंहारकतावश्यम्भावोक्त्यामुक्ता युक्ता । सा-मान्यशाखस्य पूर्वालोचनायामुपसंहारसम्भवे ऽपि विशेषशाखस्य पूर्वालोचने सामान्यशास्त्रानर्थक्यं स्यादित्याशङ्क्य तस्मिन्पक्षे विशे-षान्तर्गतत्वेन प्राप्तस्य सामान्यस्य तदुत्कालयर्हि पत्नीकरणवि-धय ऽनुवादमाह * अथ वेति * यर्हि पत्नीकरणस्या ऽपि चतुर्धा-करणवच्छन्दप्रतिपत्त्यर्थभक्षाङ्गत्वेन चतुर्धाकरणाङ्गत्वाभावादङ्गा-ङ्गिभावाया ऽनुवादायोगात्क्रमनिरपेक्षयर्हि पत्नीविधायनुवादा-नर्थक्यापत्तेः शाखान्तरप्राप्तचतुर्धाकरणा ऽनुवादाभ्युपगमे यर्हि-पत्न्यस्य शाखान्तरप्राप्तस्या ऽनुवादोपपत्तेः न विधि॰ सम्भवतीत्याशङ्क्य क्रममात्रं तर्हि विधीयतामिति पक्षान्तरमाह * अथवेति * सा ऽऽरण्यानाङ्गपरिहारमुपसंहरति * अतश्चेति * मिथस्तेषाम-सम्ब॰ ऽन्वितान पूर्वपक्षसूत्रावयवस्य व्यवधारणकल्पनयास्यैकदे-शत्वाद्विच्छिन्नत्वान्नामप्रकरणान्वय्याजितस्य विरुद्धत्वोक्तौ पदैकाद्-र्थ्यमाना मिथ सम्बन्धा न स्यात्तता च्छिद्वत्वत्यपि लक्षणार्था-भिगृणश्रुतिमनत्र त्यतस्मीत्यत्र लक्षणार्थेन सिद्धान्तसूत्रावयवे ऽनुपनय पूर्वपक्षनिरासार्थत्वेन याजनार्थं यदि रिवति भाष्य

व्याचष्टे * यदि त्विति * उपलक्षणकार्ययोर्मिथो ऽसम्बन्धात्कार्यायोगित्वेनोपलक्षणस्यानादृत्यतेत्येवं स्वमतेन व्यवधारणकल्पनां विनैव पूर्वपक्षसूत्रावयवे व्याख्याते त्वाग्नेयत्वेन द्विदेवत्यस्योपलक्षयितुमशक्यत्वादनुपलक्षितस्य चाग्नेयशब्देन ग्रहीतुमशक्यत्वान्मिथस्तेषामसम्बन्धे ऽप्येकदेवत्यस्यैव लक्षणार्था ऽग्नेयत्वोपलक्षणश्रुतिरित्येवं लक्षणार्थेति सूत्रावयवस्य व्याख्यां सूचयितुमाह * यद्यपि चेति *

इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरकृतौ तन्त्रवार्त्तिकटीकायां सर्वानवद्यकरण्यां न्यायसुधाख्यायां तृतीयस्य प्रथमश्चरणः समाप्तः ।



# न्यायसुधायाम् ।

## तृतीयाध्यायस्य द्वितीयः पादः

बर्हिर्न्यायः । लघनप्रकाशमन्त्राणां मुख्ये विनियोगाधिकरणम् ॥ १ ॥

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्त-
स्मादुत्पत्तिसम्बन्धो ऽर्थेन नित्यसंयोगात् ॥ १ ॥

लिङ्गहेतुकस्य विनियोगस्य श्रुतिसापेक्षत्वाच्छ्रौतविनियोगप्र-
कारचिन्तानन्तरं लैङ्गिकविनियोगप्रकारचिन्तायां सङ्गतिमाह *
इदानीमिति * विशिष्टाकृत्या विविधरूपविनियोगाभिधानाद्विनियो- ७६३।*
गप्रकारोक्तिः । सामर्थ्याख्यस्य लिङ्गस्य मन्त्रेष्विव द्रव्यादानाद्यङ्ग-
भूतेषु स्रुवादिष्वपि विनियोजकत्वसद्भावात्तेष्वलिङ्गहेतुकविनि-
योगप्रकारचिन्ता कस्मान्न कृतेत्याशङ्क्य मुख्यएव विनियोगो गौणे
ऽपि चेत्येतत्प्रकारव्यतिरिक्तस्य लैङ्गिकविनियोगप्रकारस्याभावात्त-
स्य चार्थप्रत्यायनव्यतिरिक्तसामर्थ्यहेतुकत्वाभावान्मन्त्रव्यतिरिक्तस्य
चार्थप्रत्यायनसामर्थ्याभावान्मन्त्राणामेव लैङ्गिकविनियोगप्रकार-
चिन्ताविषयत्वं भाष्यकृतोक्तमिति दर्शयितुमाह * लिङ्गं नामेति*
गौणार्थप्रत्ययस्य तर्हि मुख्यार्थप्रत्ययजन्यत्वेन मन्त्रे मन्त्रजन्यत्वा-
भावान्मन्त्रसामर्थ्यानुपपत्तेर्बर्हिर्मन्त्रस्य मुख्येष्वेव कुशेषु विनियो-
गो गौणेष्वपि वा कुशसदृशेषूलपाख्येषु सुगन्धादिषु तृणान्तरेष्वि-
तीयं चिन्ता न युज्येतेत्याशङ्क्याह * तत्रेति * गौणस्यार्थस्याशाब्द-
त्वे शाब्दार्थान्तरानन्वयापत्तेर्गौणे ऽप्यर्थे शब्दव्यापारो ऽस्तीत्याश-
यः । कः पुनरिति भाष्यस्य गौणार्थाभावात्सन्देहायोगेनाधिकरणा-
क्षेपार्थत्वं सूचयितुमाह * तत्रेति * तत्सिद्धिसूत्रे गौणस्यार्थस्यो-
क्तत्वान्नेह तदभावाशङ्का युक्तेत्याशङ्क्याह * तत्सिद्धीति * गौण-
त्वनिमित्तविशेषानवधारणे गुणस्वरूपसद्भावमात्रेण प्रकृतचिन्ता-
सिद्धेरिह सामान्यतो गौणे ऽर्थे सिद्धे जहत्स्वार्थाभिधायित्वादि-
निमित्तत्रयस्य वेदे ऽनुपपत्तेः प्रस्तरादिशब्दानां यजमानादिषु

गुणवृत्तिसिद्धौ लक्ष्यमाणगुणयोगवृत्तित्वरूपो गौणत्वयोगौणत्वनिमित्तविशेषस्तत्सिद्धिसूत्रे व्याख्यात इत्युक्ते तथाप्यजहत्स्वार्थाः सर्वा वृत्तय इति तत्सिद्धिसूत्रे ऽभिहितत्वादुपपदाधीनत्वादिषु चेहाशङ्क्यमानेषु पञ्चस्वपि गौणत्वनिमित्तेषु स्वार्थत्वाच्चेहोपपदाधीनत्वादिति निमित्ताशङ्का युक्तेत्याशङ्क्य स्वार्थापरित्यागवृत्तित्वमप्यर्थेन नित्यसंयोगादित्यत्रैव सिद्धं तत्सिद्धिसूत्रे व्याख्यातमित्युक्तमतो नैव गुणो नाम कश्चिदस्तीत्याशङ्का युक्तेतीति करणार्थः । एवं सति तत्सिद्धिसूत्रं पश्चात्कार्यमित्याशङ्क्याह * अयमर्थेत इति * वक्ष्यमाणगौणत्वासिद्ध्यत्कारेणापि निमित्तविशेषो क्त्युक्तेत्याशयः । उच्यतइति परिहारभाष्यं व्याचष्टे * तत्र चेति * शङ्क्यमाणोपपदाधीनत्वादिनिमित्तान्तरनिरासं विना गुणयोगनिमित्तत्वासिद्धेरुपक्रममात्रत्वसूचनार्थम् * तत्र चेत्युक्तम् * उत्पत्त्युक्त्यावगतिरुक्ता गुणाद्यवगमनं गौणत्वे हेतुरित्यर्थः । शङ्काद्वयविवरणार्थं यद्येवमिति भाष्यं व्याचष्टे * शाब्दाद्विश्य इति * कथं सर्वेषां शब्दाभिधेयतेत्याशङ्कां निराकुर्वञ्श्लोकं व्याचष्टे * परेति * पैङ्गल्यादिसामान्यस्य गुणत्वाभावाद्विशेषस्य चाग्निगतस्यान्यत्राभावादग्निगुणयोगेन माणवकावगत्यनुपपत्तेरग्नित्वपैङ्गल्यतीव्रत्वादेरसर्वगतत्वादग्निशब्दात्प्रतीयमानो ऽर्थो ऽभिधीयमानत्वादन्येन प्रकारेणावगत्ययोगान्मुख्य इत्यर्थः । अन्यशब्दस्याभिधीयमानत्वापेक्षायामपि नित्यसापेक्षत्वाद् गतिशब्दसमासाविघातः । उपपदाधीनत्वादीनां निमित्तानां सिद्धान्तिनो ऽनिष्टत्वादुपन्यासपूर्वको निरासो ऽनर्थक इत्याशङ्क्य गौणत्वनिरासायैकदेशि-

७६४।१ कल्पितानि निमित्तान्याशङ्क्य दूषयितुमुपन्यस्यतीत्याह * तत्रेति * गौणस्य मुख्याद्विवक्षार्थदोपपदाधीनप्रत्ययस्य लक्षणत्वेन शङ्कनीयत्वात्तच्चापिनश्च धर्मस्यान्यतो व्यावर्त्तकत्वेन लक्षणत्वादग्निरधीतइत्यादौ चोपपदाभावे ऽपि गौणत्वप्रसिद्धेरुपपदाधीनप्रत्ययस्याव्यापित्वादर्थधर्मत्वाभावाच्च लक्षणत्वा ऽनुपपत्तेरयेति भाष्यमयुक्तमाशङ्क्याह * सर्वेयेति * धर्मत्वाभावे ऽप्यन्यतो व्यावर्त्तकत्वाल्लक्षणत्वोपपत्तिः पूर्वार्द्धेनोक्ता उत्तरार्द्धेन पराधीना शब्दप्रवृत्तिर्यस्मिन्नर्थे पराधीनप्रवृत्तिरित्यर्थधर्मस्य पराधीनप्रवृत्तित्वस्य लक्षणतोक्ताग्निरधीतइत्यादावपि माणवकादुपपदस्यार्थप्रकरणान्नित्यवद्धेनाव्याप्तता परिहृता । नित्यशब्दार्थं व्याचष्टे * न हीति * माणवके पैङ्गल्ये प्रत्ययो माणवकप्रत्ययः । एवमपि को ऽत्र गुणो विवक्षितो यत्सम्बन्धाद् गौणत्वं स्यादित्याशङ्क्याह *

तदेव चेति* अग्न्यादिनाम्नां पैङ्गल्यादिप्रवृत्तौ माणवकादिपदान्तरस्य हेतुत्वेनानुग्राहकतयाङ्गात्मके गुणत्वे ऽभिहिते कथं पादान्तरस्य पैङ्गल्यादावग्न्यादिनामप्रवृत्तिहेतुत्वमाशङ्क्य सामान्योक्त्या समानाधिकरणकृतोक्ताग्निशब्दस्य माणवकगतपैङ्गल्यादिवाचित्वाभावे माणवकशब्दाग्निशब्दसमानाधिकरण्यायोगात्पैङ्गल्यादिवाचिताग्निशब्दस्यावसीयत इत्याशयः पदान्तरेण पदान्तरस्य स्वाभाविकशक्तिनाशेन शक्त्यन्तरानुत्पादकत्वादुपपदापेक्षित्वे ऽपि मुख्यत्वानपायान्मुख्याविवेकानापादकत्वं नैतल्लक्षणार्थं नैतदित्यादिभाष्यं व्याचष्टे* नैतदिति* स्वभावादेव पैङ्गल्ये ऽस्याग्निशब्दं प्रति मुख्यत्वं लक्षणवाक्यार्थं नापेक्षमित्यर्थः । श्लोकं व्याचष्टे *यथैवेति* सम्बन्धानुभवजन्यसंस्कारसम्बन्धस्मृतिग्रहणायाविशब्दःनचासाविति भाष्यं पदद्वयसमुदायावयवस्वात्कथं गुणशब्दात्प्रतीतेर्गौणत्वस्यैव गौणत्वलक्षणदूषणार्थत्वेन व्याचष्टातु लक्षणान्तरमुपन्यस्यति *अथेति* माणवकाग्निशब्दसमुदायवाक्यस्य पैङ्गल्यस्याग्निशब्दात्मकमवयवं प्रति गौणतेत्यर्थः । एतल्लक्षणदूषणार्थत्वेन भाष्यं व्याचष्टे * तदिति * श्लोकं व्याचष्टे * तत्रेति * उभयोरपि पैङ्गल्यपिण्डस्वरूपयोर्वाच्यत्वाद्भाव- ७६५।७
व्यग्निमाणवकशब्दौ प्रात्यात्मिकयोरर्थयोर्मुख्याविनियुक्ते ऽर्थे विषयगौणमुख्याविवेकप्रसक्तावाद्यर्थमुख्यत्वोक्तौ शब्दमुख्यत्वोक्तिरिति सूचनार्थनिकरणः । वाक्यार्थस्यैक पदं प्रति वाक्यावयवत्वात्मकगुणपदात्प्रतीतेर्गौणत्वेऽपि लक्षणान्तरोपन्यासार्थमथेति भाष्यं व्याचष्टे * इदानीमिति * सर्ववाक्यार्थानां तर्हि शब्दं प्रति गौणत्वापत्तिरिति परिहारसूचनार्थम् * पूर्ववदेवेत्युक्तम् * एतल्लक्षणदूषणार्थं नैतदितिभाष्यं व्याचष्टे *तदिति* अग्निमाणवकशब्दाभ्यामग्निमाणवकार्थयोरभिधानाद्वाक्यविशिष्टे कार्ये किं सम्भवतीति वाशङ्क्याह*नत्विति*नच्छब्देनाग्निशब्दः परामृष्टः । पैङ्गल्यस्य तर्ह्यग्निशब्दवाच्यत्वात्पदार्थत्वोपपत्तेर्वाक्यार्थत्वसम्भवाद्युच्येत ततो वाक्यार्थता भवेदित्यनेनावाच्यत्वात्पैगल्यस्य वाक्यार्थत्वनिरासो न युक्त इत्याशङ्क्याह *नचेति* वाक्यार्थत्वनिरासमुपसंहरति *तस्मादिति * गौणमुख्यविभागाद्यावमिदृष्ट्युपसंहारार्थं तदेवमिति भाष्यं व्याचष्टे * तेनेति * पैङ्गल्यस्य शब्दावाच्यत्वोक्तेर्व्यविरोधमाशङ्क्याह * माणवकस्येति * मन्दप्रसिद्धत्वात्मकं गौणलक्षणोपन्यासार्थं तथेति भाष्यं मन्दप्रसिद्धस्य गुणादवगतत्वाभावेन गौणशब्दवाच्यत्वायोगादयुक्तमाशङ्क्य मन्दप्रसिद्धस्य मन्दप्रयोगविषयभूतस्य वाक्यार्थस्योपपादनं विना निश्चेतुमशक्यत्वादुपपदस्यैवानापि

पक्षद्वये ऽनुग्राहकत्वेनाङ्गत्वाद् गुणता विवक्षितेति सूचयन् व्याचष्टे * अथेति * यथा मन्दप्रसिद्ध्या कृतमुपपदस्याश्रयणं च यथा च सुष्ठु प्रसिद्ध्या कृतमनाश्रयणं तत्तथैव दर्शयतीति मन्दप्रसिद्धत्वस्योपपदाश्रयणमिति तत्त्वोक्त्या मन्दप्रसिद्ध्यर्थे प्रतीतावुपपदस्यानुग्राहकत्वाद् गुणत्वसूचितं कथं तद्युपपदाधीनत्वपक्षात्पक्षान्तरतेत्याशङ्क्य मन्दप्रसिद्धं सन्तमप्युपपदव्यापारं लक्षणत्वेन * मुक्तत्वेयुक्तम् * एतल्लक्षणदूषणार्थमिदमपाति भाष्यं व्याचष्टे * तत्रेति * ज्ञानस्य निरवयवस्यात्वता न्यूनातिरिक्तत्वाभावे ऽपि ज्ञाप्यस्वल्पबहुत्वाभ्यां न्यूनातिरिक्तत्वसम्भवमाशङ्क्य ज्ञाप्यस्याल्पत्वात्तथात्वे ज्ञानाल्पत्वे ऽपि मान्द्यप्रसिद्धेर्निरवयवत्वेन च स्वरूपपरिमाणाल्पत्वायोगान्निरवयवसामान्यमात्रविषयत्वेन च शब्दस्य ज्ञानस्य विषयाल्पपरिमाणतया ऽल्पपरिमाणयोगान्मान्द्यायोगसूचनायाश्रुत * इत्युक्तम् * अल्पप्रयोगित्वात्सकललक्षणापन्यासार्थमयाति भाष्यमल्पप्रसिद्धत्वलक्षणाल्पप्रयोगित्वलक्षणस्य मूलभूतत्वेन विशेषं दर्शयन् व्याचष्टे * इदानीमिति * एतच्च लक्षणदूषणार्थमेतदिति भाष्यं व्याचष्टे * तदिति * पुनःशब्देन सामर्थ्यनिमित्तप्रत्यायकत्वाच्छब्दस्य मुख्यत्वं ऽन्यथास्य गौणत्वनिरासः। प्रकृते कथं सिद्धमित्याशङ्क्य शब्दस्य मुख्यत्वे ऽर्थस्यापि मुख्यत्वापत्तिरिति परिहारार्थत्वेनात्र सोऽपाति भाष्यव्याख्या सूचिता। यथा च तथा गवादिशब्दानां पृथिव्यादिरित्यनन्योपपदाधीनत्वस्यापि व्याप्तिर्दर्शिता तथास्य प्रसिद्धिप्रयोगयोरपि दर्शयितव्येत्याह * इहापि सेति * अतिव्याप्तिमेव दर्शयितुं वृद्धश्लोकं पठति * तथा चाहेति * परकल्पितेषु गौणलक्षणेषु मुख्यार्थैकज्ञानापादकत्वेन दूषितेषु वाच्यगुणयोगेन प्रतीयमानं वास्तवत्रिगुणापादकलक्षणोक्त्यर्थमयत्यादि भाष्यं तात्पर्यतो व्याचष्टे * इदानीमिति * अप्रस्तावदभिधानमित्युत्कृष्य तावच्छब्दो व्याख्येयः। अपि च पैङ्गल्यस्य माणवके च पैङ्गल्यान्वयस्याप्यभिधानमात्रत्वाद्दुष्टाप्रसङ्गपरिहारार्थं परिशिष्टस्यार्थस्य प्रतीतेरनभिधेयतामुत्तरमात्रत्वाधिकरणन्यायेन दर्शयितुम् * व्यक्तिचदित्युक्तम् * परगुणानां परत्वाकल्पनात् परगुणानां चेति वार्त्तिकोक्तां परिहर्तुमाह * सा न चेति * गुणव्यक्तीनां परत्राभावे ऽपि सामान्यानि परत्र सन्ति पुनः समत्वार्थं दर्शयितुं चित्रादौ यत्तु सादृश्यं सामान्यं तत्र किं नास्ति तथापि पृथिव्यामणसस्थानादिसमानतेति प्रदनासरूपमानसात्त्विकानां। गुणयोगनिमित्तवृत्तित्वात्मके गौणलक्षणेषु वारणस्य पदं गौणत्वासिद्धार्थस्यावयमर्थमिति भाष्य

दर्शपूर्णमासयोस्तृणसदृशाभावात् कुशविषयस्तृणशब्दो न कुशस-
दृशसुगन्ध्यादितृणान्तरोलपपर्याजिस्तरणार्थविषयस्तृणसदृशशब्द इ-
त्येव स्पष्टत्वाच्च व्याख्यातम् । गौणमुख्यविभागोक्तेरधिकरणारम्भ-
सिद्ध्यर्थत्वोक्त्यर्थं तदेवमिति भाष्यं व्याचष्टे * तस्मादिति * सु-
खग्रहणार्थं गौणत्वलक्षणानि सङ्गृह्णाति * एते चेति * स्वार्थं जहा-
तीति जहत्स्वार्थो ऽर्थान्तराभिधायी च तस्य भावो जहत्स्वार्थाभि-
धायित्वं गुणिरूपाग्न्यादिस्वार्थत्यागेन गुणरूपे पैङ्गल्यादौ वृत्तिर्गौ-
णत्वे कारणम् अग्न्यादिजातिपैङ्गल्यादिगुणसङ्घातो ऽग्न्यादिशब्दवा-
च्य स जातिरहितगुणमात्र शब्दप्रवृत्तिहेतुत्वाद् गौणत्वकारणम्। अ-
ग्न्यादिशब्दवाच्यस्याग्नित्वादेर्माणवकादावग्न्यादिगुणदर्शनेन कल्प-
नागौणत्वकारणमाणवकाद्युपपदसहायस्याग्न्यादिशब्दस्य पैङ्ग-
ल्यादौ वृत्तिरङ्गाख्यगुणभूतोपपदाधीनत्वाद् गौणत्वकारणमग्निमा-
णवक इत्यादिशब्दस्यावयवार्थानपेक्षवर्णसमुदायरूपेण पैङ्गल्यादौ या
प्रसिद्धिस्तस्याभाव समुदायावयवभूतस्याग्न्यादिशब्दस्य पैङ्गल्यादौ
समुदायावयवभूतत्वाख्यगुणवत् । प्रवृत्तिहेतुत्वाद् गौणत्वकारण
पैङ्गल्यादेरग्निर्माणवक इत्यादिवाक्यार्थत्वमग्न्यादिशब्दस्य पैङ्गल्यादौ
वाक्यावयवत्वाख्यगुणवत्त्वाद् गौणत्वकारणमग्न्यादिशब्दस्य पैङ्गल्या-
दावकल्पश्रोतृप्रसिद्धत्वमङ्गाख्यगुणभूतोपपदापेक्षत्वप्रतीतिनिमित्ताद्गौ-
णत्वकारणम् ।यस्मिन् पैङ्गल्यादावग्न्यादिशब्दस्याल्पैर्येकर्तृभि प्रयो-
ग. सो ऽल्पप्रयोगी तस्य भावो ऽल्पप्रयोगिता ऽल्पसिद्धत्वव‌द्गौणत्वका-
रणम् एतान् गौणत्वकारणपक्षानिरस्याग्न्यादिशब्दवाच्येनाग्नित्वादि-
नाग्न्यादिगुणस्य पैङ्गल्यादेर्लक्षणा माणवकादावग्न्यादिगुणवत्त्वनिय-
द्धप्रवृत्तिहेतुत्वाद्गौणशब्दवाच्यरूपगौणत्वकारणत्वेन साधितेति न-
यानां मध्ये युक्तायुक्तपक्षविवेकायोक्त किं तावदिति पूर्वपक्षभाष्यं
व्याचष्टे *तत्रेति *सकृदाम्नातस्य मन्त्रस्यावृत्त्यनापत्ति साक्षान्मुख्ये ७६७।१
विनियोगस्य मूल भविष्यतीत्याशङ्क्य प्रतिप्रधानमावृत्त्यविरोधोक्त्यर्थे
परार्थत्वादित्युक्त मुख्यविनियोगेन कृतार्थस्य गौणे विनियोजकश्रु-
त्यकल्पनादुभयाङ्गत्वायोगमाशङ्क्यानेन मन्त्रेण यदभिधातु शक्नुया-
त्तदभिदध्यादिति गौणमुख्यसाधारणश्रुतिकल्पनेनोक्त्यर्थो नित्यशब्दः
अप्राकरणिके ऽपि तर्हि विनियोगापत्तिरित्याशङ्क्य प्रकरणावग-
तसामान्यसम्बन्धसापेक्षत्वाल्लिङ्गस्याप्रकृते विनियोजकत्वायोगोक्त्यै-
व प्रकृत गौण मुख्ये च * प्रयोगितेत्युक्तम् * संस्कारत्वादि-
ति सूत्रस्य शङ्कोत्तरत्वेन व्याख्यार्थमपि चेति भाष्य व्याचष्टे * एव
चेति * प्रकरणवचोदको ऽप्यनुग्रहीतव्य इत्याह * तथेति *

ऋषिशब्देन दृश्यते ऽनेनेति व्युत्पत्त्या वेदाभिधानाद्वैदिकं मन्त्ररूपम-
र्थशब्देनोक्तम् । औत्पत्तिकेन प्रथमावगतेन मुख्येनैवार्थेन मन्त्राणां
सम्बन्ध इत्येवं सिद्धान्तप्रतिज्ञार्थमध्यमसूत्रावयवव्याख्यार्थत्वेन
स्पष्टत्वान्मुख्य एव चेति भाष्यमव्याख्याय हेत्वर्थत्वेनाद्यावयवव्या-
ख्यार्थं प्रकरणे हीत्यादिभाष्यं प्रधानैकवाक्यतां विनाप्यभिधेयार्थ-
त्वोपपत्तेः प्रधानैकवाक्यतोक्त्यानर्थक्यादयुक्तमाशङ्क्य क्रतुशेषत्वो-

विनियोगादन्योन्यानपेक्षाणां च पदार्थानामनुष्ठेयत्वावगतेरन्योन्यान-
पेक्षाणामेव स्मारकापेक्षत्वात्प्रत्येकमेव पदार्थेषु मन्त्रविनियोजिकायाः
श्रुतेः कल्प्यायां मुख्यप्रत्यायनं विना गौणप्रत्यायनाशक्तेर्मुख्यप्र-
त्यायनाशक्तेर्मुख्यविषयविनियोजकश्रुतिकल्पनां विना गौणविषय-
श्रुतिकल्पनायोगान्मुख्यविषयश्रुतिकल्पनायाः प्राथम्यावगतेर्मुख्य-
विनियोगेन मन्त्रस्य नैराकाङ्क्ष्यान्न गौण मन्त्रविनियोजककल्पना
न युक्तेत्येवं परिहारार्थतया मुख्येनार्थेन गौणतार्थप्रत्यायनवेलायाम-
पि मन्त्राणां प्रत्याय्य प्रत्यायनलक्षणो संयोगादित्येवमस्यावयव-
व्याख्यार्थं सत्यमित्यादिभाष्यं व्याचष्टे * मुख्येन चेति * गौणेन
फलार्थत्वाच्च मुख्ये श्रुतिकल्पनेत्येवं क्रममप्यवसीयत इत्याशङ्कां निरस्य
श्लोकं व्याचष्टे * अपि चेति * अपि वा प्रयोगसामर्थ्यान्मन्त्रो
ऽभिधानवाची स्यादिति द्वितीयमन्त्राधिकरणसूत्रन्यायेन सामर्थ्या-
धीनत्वाच्छ्रुतिकल्पनस्य मुख्ये च निरपेक्षसामर्थ्यावगतस्तत्रैव श्रुतेः

मन्त्रप्राप्त्युपायान्तरनिवृत्त्यशक्य सामर्थ्यप्राप्त्युपायान्तरयोश्चाभावाद्गौ-
णविनियोगायाः सक्तार्थतया ऽर्थेन नित्यसंयोगादित्यवयवस्या-
प्यव्याख्यार्थमपि च गौणस्येति भाष्यं व्याचष्टे * किं चेति *
मुख्यार्थविनियोगेन मन्त्रपाठस्य कृतार्थत्वे ऽपि मुख्यद्वारा गौणप्रत्याय-
नार्थं गौणा अपि मन्त्रा विनियोज्या इत्याशङ्क्योपायान्तरेणापि गौण-
प्रत्यायनस्य सम्पत्तेर्मन्त्रनियमो न युक्त इत्येवं परिहारार्थत्वेन यदि गौ-

घेति भाष्यावयवसामान्योक्त्यर्थत्वेन व्याचष्टे * तत्रेति * प्रद-
र्शनशब्दस्य करणव्युत्पन्नत्वात्तत्र भाष्यमध्ये उपस्थानं चेत्यतद्भा-
ष्यं विशेषप्रदर्शकं तच्च प्रकरणानिरपेक्षस्याप्राप्तज्योतिष्टोमान्वयस्य
देवतारूपेण चिह्नेनोपलक्षितस्य मन्त्रमात्रस्य ज्योतिष्टोमान्वयप्र-
दर्शनार्थमित्यर्थः । ज्योतिष्टोमान्वयस्य प्रदर्शनीयत्वसूचनायाप्रा-
प्ततामुक्तामुपपादयितुं प्रकरणानैरपेक्ष्योक्तिः । आग्नीध्रसदो हवि-
र्धानानां क्रत्वैकान्तिकत्वात्तत्स्वरूपान्वयमात्रविधानेऽप्यनुनिष्पादि-
तत्वेन क्रत्वन्वयासिद्ध्यावाक्यभेदपरिहारशङ्कानिरासार्थत्वेनानर्थकश्चो-
पदेशः स्यादसम्बन्धात्फलवता न ह्युपस्थानं फलवदिति सूत्रम-
वतारयति * अथेति * क्रत्वैकान्तिकत्वेऽप्याग्नीध्रादीनामुपस्थान-
मस्य तत्स्वरूपान्वयिधर्मत्वेन तद्द्वारकक्रत्वन्वययोगादाग्नीध्रादिश-
ब्दानां च संस्कारनिमित्तत्वाभावेनाहवनीयादिवत् स्वरूपनिष्पत्त्यै वै
संस्कारानपेक्षणान्नैष्फल्यापत्तेरुपस्थानस्वरूपमन्त्रोपदेशः तन्मात्रस्य
फलवदसम्बन्धापत्तेरनर्थकः स्यादित्येवमर्थत्वेन स्पष्टत्वात्फलवते
त्यन्तं सूत्रावयवमव्याख्याय न हीति सूत्रावयवस्याग्नीध्रादिद्वा-
रोपस्थानस्य क्रत्वन्वययोगेऽपि प्रकरणात्क्रत्वन्वयोपपत्तेः फ-
लवत्त्वं भविष्यतीत्याशङ्कानिरासार्थत्वेनावतारणार्थं नन्विति भा-
ष्यं गौरवलक्षणवाक्यभेदपरिहारोपयोगपर्यन्ततया व्याचष्टे * न
न्विति * प्रकरणात्क्रत्वन्वयः प्रतीयमानोऽप्यविधीयमानोऽनु-
ष्ठानान्न निष्पद्यत इति सामान्यान्वयस्यापि विधेयत्वाद्गौरवे स-
त्यपरिहार्ये वाक्यभेदे क्रत्वन्वयशून्यमुपस्थानं न फलवदित्येव शङ्का-
निरासार्थत्वेन न हीति सूत्रावयवव्याख्यार्थं यदीत्यादिर्हतीत्यन्तं
भाष्यं तात्पर्यतस्तावद्व्याचष्टे * न त्विति * सामान्यान्वयोऽप्यवि-
धीयमानो न निष्पद्यत इत्यर्थः । एतदेव भाष्यं स्वरूपतो व्याचष्टे *
यदीति * मन्त्रविशिष्टस्याग्नीध्राद्युपस्थानस्य प्रकरणगम्यौ ज्योतिष्टो-
मान्वयौ यद्यनुष्ठातुमिष्येत तदा विधिं विनाऽनुष्ठानायोगात् ज्योति-
ष्टोमान्वयित्वेनोपस्थानमुपदिश्येतेति स्पष्टीकरणायोपदर्शोक्त्या भाष्ये
क्रत्वन्वयविध्यापत्त्युक्तावपि विवक्षाकार्यविधिसार्थत्वाभ्युपगमे तथैव
क्रत्वन्वयविध्यापत्त्युक्तिः सेत्स्यतीति मत्वा वत्रेति भाष्यावयवमुपेक्ष्य
भाष्यं योजितम् । स्वरूपमात्रेणोपस्थानस्य मन्त्रान्वयविधावुपस्थान-
मात्रे मन्त्रप्राप्तिरुक्तेति व्याख्यातुम् * क्रत्वन्वयमविधायेत्युक्तम् * यथा
कथं चित् प्राप्तोपस्थानानुवादेन मन्त्रविधौ अनुवाद्यस्योपस्थानस्या-
ग्नीध्रादिना विशेष्टुमशक्यत्वादाग्नीध्राद्यनुवादेन मन्त्रविशिष्टोपस्था-
नविधावपि प्रायश्चित्तार्थावभृथस्नानवत्क्रत्वन्वयानभ्युपगमे स्वत-

ऽप्रधानकर्मत्वापत्तेः सर्वोपस्थानेषु मन्त्रप्राप्त्युपपादनायानूद्य विधि-
विशिष्टरूपेण * चेत्युक्तम् * क्रत्वन्वयानपेक्षत्वोक्त्यर्थं च सर्व-
शब्दव्याख्यार्थं लौकिकोक्तिः । क्रतूपकारफलाभावे ऽपि पुरुषार्थरू-
पेण फलेन फलवत्त्वमाशङ्क्य फलाश्रुतेः शुद्धोक्तोक्ता । अनुवाद्यस्या
ऽप्युपस्थानस्य द्विरुक्तविधौ ऽवघातादिवद्विधेयस्यापि वा दृष्टार्थत्वेन
ग्रहं सम्मार्ष्टीतिवत्प्रकरणादिदोषलाभमाशङ्क्य प्रकरणबाधं भा-
ष्योक्तं सम्मार्गावदानवैषम्येणोपपादयितुमननुमितश्रुतितोक्ता । फ-
लवत्त्वोपपत्तिरिष्टेतेति श्रुत्या प्रकृतापूर्वसाधनांशलक्षणार्थं प्रकरणा-
पेक्षणाद्बाधितेन प्रकरणेन श्रुतिमनुमायोपस्थानं विधीयत इत्याश-
ङ्कानिरासार्थं न प्रकरणमाप्यायनं प्रकरणस्यान्यनिवृत्तौ व्यापारा-
भावे ऽप्यपूर्वसाधनांशलक्षणाद्वारा विशेषकत्वोपपत्तेरयुक्तमाशङ्क्य
क्रत्वन्वयविधाने ऽपूर्वलक्षणाभावेनाविशेषकत्वोपपादनार्थम् * न
हीत्युक्तम् * प्रकृतस्यापि तर्हि मन्त्रस्योपस्थानमात्रान्वयादानर्थक्यं
क्रत्वन्वितस्याचोपस्थानस्य मन्त्रान्वयार्थं क्रत्वन्वयविधौ गौरवं स्या-
दित्याशङ्क्य प्रकृतस्य फलक्रत्वन्वयत्वात्क्रत्वङ्गोपस्थानविषयत्वाव-
धारितेर्थवत्त्वोक्त्यर्थमस्मत्पक्षे पुनरित्यादिभाष्यं व्याचष्टे * अस्मत्पक्षे
त्विति * लाघवं चत्वनेनान्यादिति भाष्यावयवो व्याख्यातः । अ-
तिलाघवोक्त्यर्थमथ चेति भाष्यं व्याचष्टे * अथ चेति * आग्नी-
ध्रादीनां मन्त्राणां च प्राप्तत्वादुभयप्राप्तौ सम्बन्धविधानस्य यत्नेऽभी
लक्षणत्वेन तत्र स्वशब्देन सम्बन्धो विधीयत इति जघन्याधिकरण-
भाष्ये वक्ष्यमाणत्वाज्ज्ञातयोर्विधाने ऽपि च प्रत्ययार्थभूताया भाव-
नाया विशेषणपरे ऽपि विधौ विध्यभ्युपगमात्तदन्वयद्वारा ऽवगत-
स्य कारकयोः परस्परान्वयस्य विधेर्भावनायाश्चावच्छेदकधात्वर्थापे-
क्षायामात्मनेपदालोचनयाभिधास्यधात्वर्थावच्छिन्नत्वावगमादुपस्थे-
याग्नीध्रमभिदध्यादिति वाक्यार्थप्रतीतेरन्यथाप्यग्नीषोमीयादिभिश्च सन्नि-
हितविषयमन्त्रवर्णविभक्त्यादियुक्ते समीपस्थान विना ऽर्थप्रत्यायकेः
प्राप्तस्य समीपस्थानस्यानुवादोपपत्तेस्तस्यापि सामान्यान्वयपदविधा-
नादिति लाघवाभिप्रायः । उपतिष्ठत इत्यात्मनेपदालोचनया समा-
र्थादितीत्यर्थः प्रतीयत इति यदुक्तं भाष्यकृताभिधानान्यथानुपपत्त्यो-
पस्थानप्राप्तिरुक्ता ॥

## सर्वेषां चोपदिष्टत्वात् ॥ २३ ॥

केवलप्रकृतपक्षसमर्थयितुमन्त्र तात्पर्यच्छिन्नत्यादिस्य पूर्वपक्ष-
७९७। वृत्तरूपाधिकरणानुमापणपूर्वं सूत्रं व्याचष्टे * यदिवति * न वे

निर्माल्यतां, यान्नीतिस्मृत्या यातयामत्वनिषेधादभ्युपेत्यवादमात्रेण विधिलाघवलक्षणन्यायावगतप्रकृतमात्रविषयत्वादाग्नेय्येतिवचनाद्यातयामस्यापि विध्युपपत्तिरुक्ता पदे जुहोतीति च विशेषशास्त्रेणाहवनीये जुहोतीति सामान्यशास्त्रस्य विकल्पायोगात्समुच्चये चाश्रुतप्रधानावृत्त्यापत्तेर्बाधो वक्ष्यते गुणावृत्तिस्तु प्रधानानुरोधेनोचितैवेत्याशयः । स्वमतेन शिष्टत्वादिति पूर्वपक्षसूत्रावयवोक्तापाद्यसिद्धान्तहेतुदूषणनिरासार्थत्वेन सूत्रं व्याचष्टे * तथेति * यद्यप्यनुभाषणभाष्यमुपतिष्ठतइति विधिप्रत्ययपोक्तेन कार्यान्तरोपदिष्टत्वेन विशेषणात्प्रकृतमात्रग्रहणं वाच्यं न च तत्सम्भवति प्रत्ययस्योपलक्षणत्वाभ्युपगमे विधायकत्वायोगापत्तेरित्येवं प्रत्ययेन विशेषणस्य सिद्धान्तहेतुत्वमापाद्य शिष्टत्वादित्यवयवोक्तं दूषणोनुभाषणार्थत्वेन व्याख्यातुमाह * यदि स्यादिति * कल्पसं सामान्यान्वयप्रकृतमन्त्रविध्यै विशेषान्वयविधिमात्रेणाग्नेयीत्वद्व्यर्थवत्त्वोपपत्तेः सामान्यविशेषान्वयकल्पनापादकमाग्नेयीमात्रग्रहणं न युक्तमित्यनेनैव न्यायेन प्रकृतमात्रग्रहणरूपविशेषसिद्धेर्न प्रत्ययेन विशेषणं सिद्धान्ते हेतुत्वेनाभिप्रेतमित्येवं परिहारार्थत्वेन सौत्रचशब्दव्याख्यानार्थं तद्वितिभाष्यं न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यतइति भाष्येण सिद्धान्तहेत्वन्तरं यद्युक्तोपदिष्टत्वेन विशेषणं सिद्धान्ते हेतुर्नाभिप्रेत इति उत्तरमर्थादुक्तमित्येवं व्याख्यातुमाह * तद्विति * प्रतिभासनविवक्षयोपहासार्थं शोभति प्रयुक्तः । न केवलमन्यथैव सिद्धेः प्रत्ययेन विशेषणमनभिमतं किं त्वसम्भवादपीत्येव सूत्रव्याख्यार्थमपि चेति भाष्यं व्याख्यातुम * तथा हीति * चशब्दार्थे हिशब्दः । तदाहरणार्थं सर्वं इति भाष्यं व्याचष्टे * सर्वो हीति * स्वाध्यायो ऽध्येतव्य इत्यध्ययनविषयेणाहरहः स्वाध्यायमधीयीतेति च ब्रह्मयज्ञविषयेण वाचस्तोमे सच सर्वाणि यजूंषि सर्वाणि सामानि पारिप्लवं शंसतीति वाचःस्तोमविषयेणाश्विने शस्यमाने यदि सूर्यो नाभ्युदियादपि सर्वा दाशतयीरनुब्रूयादिति चाश्विनानुद्यत्सूर्यास्याविषयेण प्रत्ययेन ताः सर्वा विहिता इत्यर्थः । तेनेति सूत्रार्थोपसंहारभाष्यं व्याचष्टे * अत इति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे * तस्मादिति * प्रकृतमात्रग्रहणेन सामान्ययकल्पकार्थोपपत्तिप्रतिबन्धमात्रं विधिलाघवापादकत्वात्सिद्धान्तहेतुर्न प्रत्ययेन विशेषणमिति तस्माच्छब्दव्याख्ययोक्तम् ॥

भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम् ॥ ९ ॥

## लिङ्गसमाख्यानाभ्यां भक्षार्थता ऽनुवाकस्य ॥२४॥

मुख्यसामर्थ्यात्मकमेव लिङ्गं विनियोजकं गौणसामर्थ्यात्मक-
मपि वेत्येवं सामान्यान्वयापेक्षं लिङ्गं विनियोजकं निरपेक्षं वेत्येवं लै-
ङ्गिकविनियोगप्रकारे लिङ्गस्वरूपगते सापवादप्रसङ्गे चिन्तिते सा-
क्षादचोदितेषु सामर्थ्याक्षिप्तेष्वनुष्ठेयेषु लिङ्गं विनियोजकं न वेत्येवं
विषयगतलैङ्गिकप्रकारचिन्तार्थत्वेन पादसङ्गतिर्लिङ्गश्रुत्योश्च सामा-
न्यान्वयसिद्ध्यर्थापेक्षत्वात् दुर्बलकप्रकरणाद्यनुरोधात्सङ्कोचलक्ष-
णे बाधे ऽनन्तराधिकरणद्वयेनोक्ते ऽत्रापि सामान्यान्वयसिद्धौ भ-
क्षानुवाकसमाख्यापेक्षया लिङ्गबाधस्य प्रसक्तस्यापवादानन्तरसङ्ग-
तिं स्पष्टत्वादनुक्त्वा कृत्स्नानुवाकोदाहरणप्रयोजनमाह * समस्तेति *
भाष्ये त्वादिशब्दस्तुल्यन्यायोदाहरणान्तरग्रहणार्थं चिन्ताविषयं वि-
विञ्चन् सन्देहभाष्यं व्याचष्टे * अत्रेति * वसुमद्गणादिशब्दानां
प्रातःसवनादिशब्दसमानाधिकरण्यस्यानेन्द्राधिकरणे व्युत्पादयि-
ष्यमाणत्वस्य सवनस्तुत्यर्थत्वसूचनार्थो सस्तुतेत्यादिः। सोमलिङ्गत्व-
व्यपायार्थं किं प्राप्तमित्यादिप्रयुज्यन्त इत्यन्ते पूर्वपक्षभाष्य सख्या-
समित्यादिनामाख्यानानां तथा तु विशेषणीभूतस्वार्थत्वाच्चित्यहेतुनुक्ते-
रयुक्तमाशङ्क्य तद्धितश्रुतमित्यादिभाष्यवक्ष्यमाणचोदितप्रकाशना-
७९८। र्थत्वाद्योगलक्षणहेतूपजीवनेनोपपादयति * तथेति * तद्धीति
भाष्यवक्ष्यमाणोपजीवनार्थं * भक्षस्येत्युक्तम् * प्रयोजनं चेति व-
क्ष्यमाणहेतूपजीवनात्मा * यन्तेरित्युक्तम् * प्रकृतापूर्वसाधनत्वेनाव-
गतानामेव मन्त्राणां लिङ्गविनियोगस्य सामान्यान्वयसापेक्षत्वव्यु-
त्पादनेन स्थितत्वाद्ग्रहणादौ या चोदितत्वाद्यर्थाक्षेपस्य च लौकिक-
साधनत्वमात्रेणापपत्तेरपूर्वसाधनत्वरहितं द्वारं विनियुज्यमाना-
मपूर्वसाधनत्वव्याघातापत्तेस्तथाचोदितमप्राप्तं चोदिताभिधानाद्वि-
त्येनेन न्यायेन सख्यासमित्यादीनामपि चोदितभक्षविशेषणीभूत-
ग्रहणाद्यभिधानद्वारा भक्षाभिधानार्थत्वावगमाद्भक्षेहीत्यादौ भक्षया-
मीत्यन्ते ऽभक्षमन्त्रत्वेनापत्तसन्देहगृहीतत्वामितरेषामपि पदाना-
मभक्ष्यातिरिक्तार्थपरत्वायोगाद्यथा देवस्य त्वेति मन्त्रस्य चादितनिर्व-
पाभिधानार्थत्वात्सवित्रादिपदस्याचोदितत्वेनाद्यप्रसाधुक्तावां कथं
तर्हि चोदितार्थानां सवित्रादिपदानां प्रयोग इत्याशङ्क्य ततश्चेन म-
पित्रादय प्राधान्येन वक्तव्या इत्यनेन कारणेन सवित्रादीनामव-
धर्नामिति नास्ति किं तु निर्वापस्तुत्यर्थं सवित्रादिपदं प्रयुज्यतेति न-
षम वक्ष्यते आविष्यामहणादीनां भक्ष विशेषणत्वेनाभिधानात्सख्यास-

मित्यादीनामेकभक्षाख्यप्रधानभूतार्थानां भक्षयामिपदैकवाक्यत्वाद्ग्र एव विनियोग इत्याशय । लिङ्गेन वाक्यबाधादेकवाक्यत्वायोगशङ्कार्थं न स्विल्यादिभाष्यमेकोपक्रमोपसंहारत्वेनैकवाक्यत्वावगम-नसामर्थ्यरूपाल्लिङ्गादेकवाक्यत्वावगत भक्षहीत्यस्याप्यहिशब्दयोगादेहिबसचित्यकवाक्यत्वेन ग्रहणार्थत्वाभ्युपगम वा भाष्य तत्परि-त्यागायोगादयुक्तमाशङ्कोपपादयितुमाह * इत्युक्त इति * भक्ष-ण ऽपिशब्दाद्ग्रहण ऽप्युपपत्तेरेकोपक्रमोपसंहारत्वानिश्चयाच्छङ्का युक्ता वस्तुतस्तु प्रधानभूतभक्षार्थत्वसम्भवा गुणभूतग्रहणार्थत्वा-योगादेहियसचित्यादग्रहणार्थत्व भाष्यकृताक्तमित्यथ सर्पहिंसा-र्थत्वस्मरणाद्ग्रहणार्थता न युक्तेत्याशङ्क्याह * यद्यपीति * यत्र क्वापि विनियुज्यमानस्य वाहो सामर्थ्याद्ग्रहणस्यावान्तरव्यापारत्वा-वगते पाणेरप ग्रहणसृक्तावसाधारण्ये ऽपि पाणिपर्यन्ते वाहुत्वादे-शात् वाहारसाधारणत्वापपत्तर्बीजमन्तुसन्तान स्मृताविर्वपतिरिव वाहुकरणक वाभावाविनाभावान्नामत्तकया लक्षणयास्माद्धातोर्ग्रह-णप्रतीतिरित्याशय ॥

क्रियावाचित्वमाख्यातुमेकैको ऽर्थो निदर्शित ।
प्रयोगता ऽनुमन्तव्या अनेकार्था हि धातव ॥

इति स्मृतौ वृद्धप्रयोगाच्छूरुत्येव ग्रहणार्थतावसीयत इत्याह * अस्ति चेति * ग्रहण वृद्धप्रयोगाद्धिंसाया च स्मृतेरुभयानुग्रहार्थं ग्रहण कृत हिंसावाचित्वावगत सत्ये लक्षणया ग्रहणार्थत्वेत्यन्यथा समाधत्ते * ग्रहणमिति * न च कल्पमिति भाष्यावयव व्याचष्ट * तयेति* चक्षिङ स्वाभाविकार्थत्वस्मरणादेव भक्षणार्थता न युक्तेत्याश-ङ्क्याह * यद्यपीति * अत्राप्युभयानुग्रहार्थं भाषणकृतप्रकाशनवा-चित्वावगतेर्लक्षणया प्रकाशनार्थतेत्याशय । प्रयोगप्रदर्शनार्थं नृ-चक्ष शब्दव्याचक्षाणो मन्त्रावयव शंसयति * तनेति * चक्षिङ व्याप्रादेशस्मरणात्तस्य चानिट्त्वात् ख्यपमिति रूपासिद्धिमाशङ्क्याह *भक्ष्येयमिति* छन्दसि वणानुविधिरित्यह ख्याञित्युपसंख्यानकर-णात्सिध्यद्बहुल लेटीति सिध्वकरणाश्रयणाच्च रूपसिद्धिरित्याशय । हिनोतर्गतौ स्मरणादुपसंहारे च नाभेरधस्ताद्गतिनिषेधादुपक्रमो-पसंहारपर्यालोचनेन्द्रियगणवितृप्तीकरणनिषेधाच्चक्षुर्नोसाश्रोत्रस्वङ्गन्द्रयास्यसप्तमर्षिवेयस्त्वन्द्रस आरसप्रमाणाख्यसंसर्प्युपस्थापनो-स्योरपि नाऽयूर्ध्वगात्रगतिमात्रार्थत्वप्रतीते सम्यञ्जरणार्थता न यु-क्तेत्याशङ्क्य हिनोते प्रीणने प्रयोगाद्धुतिवच्च वृद्धावपि स्मृतेर्वनन-रूपप्रीणनार्थत्वाविरोधात्प्रीणनाधस्तादगत्योश्च सम्यञ्जरणार्थतामु

पपादयितुमाह * द्वित्वेति * शङ्कोपसंहारार्थं तदितिभाष्यं व्याचष्टे * तस्मादिति * अन्यानि चास्येति भाष्यान्वयेन भक्षानुवाकावयवभूतानामेहीत्यादिपदानां लक्षणविशेषणीभूतस्वार्थवाचित्वोक्त्या विलिङ्गविरोधाभावस्याज्ञानाच्छङ्कितेति मत्वा तत्र स्मारणेन परिहारार्थं उच्यते इतिभाष्यं व्याचष्टे * तदिति * ग्रहणविक्षणयोः प्राग्वर्तमानत्वेन सम्यक्करणस्य चोर्ध्वं वर्तमानत्वेन विशेषणतेत्यर्थः । विशेषणविशेष्यभावे ऽपीडोपह्वानेडाभक्षणवत्पृथक्प्रकाशनोपपत्तेर्भिन्नार्थत्वाविरोधमाहेतिभाष्येणाशङ्क्य उपह्वानवद्ग्रहणादीनां पृथग्विध्यभावात्पृथक्प्रकाश्यत्वं नास्तीति परिहारार्थमुच्यतइति भाष्यं व्याचष्टे * तेनेति * वर्तमानप्रत्ययोक्तिसूचितस्य विध्यभावस्य तच्छब्देन परामर्शाद्ग्रहणादीनां विध्यभावेन कारणेन विशिष्टलक्षणे प्रकाशनं ऽर्थाद्विशेषणभूतस्य ग्रहणादेराक्षेप्यत्वात्प्रकाश्यत्वात्पृथक्प्रकाश्यत्वात्पृथक्प्रकाश्यत्वाभावेनैकार्थ्योपपत्तेर्लिङ्गविरोधाभाव इत्यर्थः । पृथग्विध्यभावे ऽपि पृथक्प्रयत्नोपाद्यत्वात्पृथक्प्रकाश्यत्वाभावेनैकार्थ्योपपत्तेर्लिङ्गविरोधाभाव इत्यर्थः । पृथग्विध्यभावे ऽपि पृथक्प्रयत्नोपाद्यत्वात्पृथक्प्रकाशार्थं लक्षणस्वप्राधान्योपपत्तेर्लक्षणाया विशेषणत्वेन ग्रहणादिप्रकाशनं न युक्तमित्याशङ्काशयविवरणार्थं नैवमिति भाष्यं व्याचष्टे * यद्यपि चेति * पृथक्प्रयत्नोपाद्यत्वे ऽप्यविहितत्वेन विध्येकसमधिगम्यापूर्वसाधारणत्वायोगादपूर्वसाधनीभूतमन्त्रादिरूपधर्मादिकोपायद्वारत्वायोगाद्ग्रहणादेः स्वातन्त्र्येण प्रकाशनं नेत्युक्तमिति परिहाराशयविवरणार्थत्वेन भक्षणस्यैव समुच्चारितेन शब्देन द्विरुक्तावयवस्य भक्षयतीत्यादिना विधेयत्वान्मन्त्रप्रकाश्यत्वं नाविहितस्य ग्रहणादेरित्येवं सौत्रसमाख्यानवद्व्याख्यानार्थं अवैत्यादि न च तैः प्रयोजनमित्यन्तं भाष्यं व्याचष्टे * तथापीति * लिङ्गाद्विधार्थत्वावगतेरेकवाक्यत्वायोगाशङ्कापरिहाराशयविवरणार्थत्वेनास्यैव सूत्रावयवस्य समीहितत्वरूपेण प्रयोजनत्वेन लक्षणरूपस्यैवार्थस्याख्यानाच्च लिङ्गविरोध इत्येवं व्याख्यार्थं प्रयोजनं चेति भाष्यमर्थकत्वादेकं वाक्यमित्यर्थः । शब्दस्य प्रयोजनवाचित्वाशयमिति सूचयितुमाह * तदिति * न किञ्चिदित्यनेन च तैरिति भाष्यावयवं व्याख्याय बुद्धिस्थीकृतस्य प्रयोजनं चेत्यनन्तरभाष्यस्य तच्छब्देन परामर्शत्वेन भाष्यया यदुक्तं तच्चिवांप विस्तरेणोपपादितमित्यर्थः । तस्मादिति भाष्यं लिङ्गविरोधाशङ्कापरिहारोपसंहारार्थत्वेन व्याख्यातुमाह * तस्मादिति * सामान्यान्वयार्थमपेक्षितया समाख्यया इन्द्रस्यानुवाकस्य भक्षणार्थत्वावगमाल्लैङ्गिकविभज्य विनियोगो-

त्त्वर्थत्वेनान्यथासिद्धावयवस्य व्याख्यार्थं समाख्यानं चेति भाष्यं व्याचष्टे * तथा चेति * अध्वर्य्वादिसमाख्यावद्भक्षानुवाकसमाख्याया वैदिकत्वाभावेन विनियोजकत्वायोगाल्लिङ्गस्य च तदपेक्षा नास्तीत्याशङ्कार्थं नन्विति भाष्यमवतारणपूर्वं व्याचष्टे * तत्रेति * मिथ्यात्वाययं शङ्का समाख्याया विनियोजकत्वायोगाद्यथा वेति विकल्प्यावैदिकत्वे ऽप्यनादित्वेन पुरुषनिबन्धनदोषाभावान्मिथ्यात्वं तावन्नास्तीति परिहारार्थं यद्यपीति भाष्यं व्याचष्टे*तदिति * श्लोकं व्याचष्टे * यथैवेति * अन्धपरम्परादोषापत्तिशङ्कानिरासाय सा- ७९९। क्षाद्विनियोगविषयप्रामाण्यनिरासेन वाच्यवाचकत्वविषयप्रामाण्यसूचनार्थत्वेन श्लोकं व्याख्यातुम् * न चेत्युक्तम् * अतीन्द्रिये ऽर्थे ऽन्धपरम्परा स्यान्न च वाच्यवाचकभावो ऽतीन्द्रिय इत्याशयः । भक्षानुवाकसमाख्यानस्यैतदनुवाकवाचित्वावसाये ऽप्यतीन्द्रियविनियोगे प्रामाण्यं न सम्भवतीति द्वितीयकल्पं किमितीति भाष्येणाशङ्क्य साक्षाद्विनियोगप्रामाण्यायोगे ऽपि क्रमादिपरम्पराद्वारविनियोजकश्रुतिकल्पनद्वारा वैदिकसमाख्यावद्विनियोगप्रामाण्योपपत्त्युक्त्यर्थं तदित्याद्यनुमास्यामह इत्यन्तं भाष्यमवैदिक्याः समाख्यायाः वेदार्थावधारणवेलायामबुद्धिस्थत्वाद्विनियोजकत्वायोगशङ्कानिरासपूर्वं व्याचष्टे * अतश्चेति * सन्निध्युच्चारणवाचिना समभिव्याहारशब्देनोच्चारणार्हशब्दसान्निध्याभिधानाद्वेदाधिष्ठानाच्चास्य सन्निधेर्वैदिकत्वसूचनार्थम् * विगृह्यमाणेत्युक्तम् * षष्ठीसमासात्सम्बन्धमात्रावगमे ऽप्यङ्गाङ्गिरूपसम्बन्धावगतिः कथमित्याशङ्क्य सम्बन्धसामान्यसन्निधिलक्षणात्क्रमादुभयापेक्षालक्षणप्रकरणकल्पनद्वाराङ्गाङ्गित्वविशेषरूपसम्बन्धापादकवाक्यकल्पने ततश्चेत्यनेन सूचिते तदुपपादनार्थं भक्षस्याङ्गविषयानुवाकस्य चाङ्गविषयापेक्षा भक्षो ऽपि हीत्यनेनोक्ता । अग्निःसिञ्चतीत्यन्वयविरोधावगमे ऽपि सामर्थ्यं विना निर्वाहायोगात्तत्कल्पनास्ति चेत्यनेनोक्ता । सत्यपि सामर्थ्ये ऽङ्गाङ्गित्ववाचिश्रुत्यभावे ऽङ्गाङ्गित्वायोगा चशब्देन श्रुतिः सूचिता विनियोजकश्रुत्यनुमाने ऽपि विध्येकगम्ये ऽर्थे विधिश्रुतिं विनाङ्गत्वायोगमाहेति भाष्येणाशङ्क्य समाख्यावगताङ्गस्यानुवाकस्य प्रयोगवाक्याद्विध्युक्त्यर्थमत्रेति भाष्यं व्याचष्टे * तेनेति *

## तस्य रूपोपदेशाभ्यामपकर्षो ऽर्थस्य चोदितत्वात् ॥ २५॥

लिङ्गविनियोगाधिकारादुपदेशस्य च सम्यग्जरणे ऽपि

कृच्छ्रोपपाद्यत्वात्तदुपदेशग्रहणस्याप्रत्यक्षमात्रार्थत्वप्रतीतेर्भक्षानुवाक-
स्यावयवानां रूपाच्चिह्नलिङ्गेन भक्षादपकर्ष इत्येव तस्य रूपा-
दपकर्ष इत्येव तस्य रूपादपकर्ष इत्येतावत्सूत्रावयवव्याख्यानार्थं
रूपादित्यादि न लक्षणत्वेन भाष्यं व्याख्यातुमाह * परिचोदनेति *
कीदृक् परिचोदनोक्ता मार्गं इत्यपेक्षायां मन्त्रस्य श्रौतार्थत्यागात्तत
श्रुतत्वदृष्टस्यानुग्राह्यस्याग्रहणात्तत्के स्वाभिधानमवान्तरव्यापारीकृत्य
लक्षणार्थं त्यागात्कतृकत्वानुपपत्ते स्वप्राधान्यस्यानु * प्राधान्यादि-
त्युक्तम् * अनेन च भाष्यस्यमुख्यशब्द श्रुतिप्राधान्यरूपार्थद्वया-
शयतया वाक्यान्यविशेषणत्वरूपार्थद्वयाशयतया च लक्षणाशब्दो
व्याख्यातो भवति । कृत्स्नस्यैकवाक्यत्वाल्लक्षणया विनियोगस्य पूर्वप-
क्षितस्य निरासार्थं मुख्यार्थंबाधेतिभाष्यमेवं व्याख्यातुं ग्रहणादिप्र-
काशार्हेण रूपशब्दोक्तेन सामर्थ्यात्मकेन लिङ्गेन वाक्यबाधोक्तयो
र्योऽर्थवान्तव्यपलुप्ततृतीयाकथेति प्रत्यया ग्रहणादिविच्छेदयुक्तो
ग्रन्थ सर्वाण्येतानि लक्षणविशेषणानीति भाष्योक्त लिङ्गविरोध
दूषयितुमनुभाषते * न त्विति * एवमपि विपरिचोदनाभाष्योक्त
दूषणमाह * सत्यमिति * ग्रहणाद्यभिधानसामर्थ्यरूपप्रत्यक्षलिङ्गा-
पक्षैकवाक्यताकल्प्यलक्षणाद्वारभक्षपदैकवाक्यतोपगमनसामर्थ्य
रूपस्य लिङ्गस्य पूर्वपक्षोक्तस्य श्रुतिकल्पन विप्रकर्षाद्दौर्बल्यमित्यर्थ ।
एव च प्रत्यक्षलिङ्ग विनियोज्यत मन्त्रादिना भक्षस्य वा रुद्रत्वादेर्हि च
सवित्रादीनां च प्रत्यक्षाल्लिङ्गाद् ग्रहणादिषु प्रवृत्तेर्लक्षणादपकर्ष

८००।१ इत्याह * तेनेति * यद्यपि ग्रहणादय इति सोऽग्रसमाख्यानो-
क्तिप्रथमे व्याख्यायभाष्योक्तार्थानुभाषणार्थमुच्यत इति भाष्यं व्याच-
ष्टे * न त्विति * तत्परिहारार्थत्वनार्थस्य चादित्वादिति सूत्रावयव-
स्य भक्षाविध्यन्यथानुपपत्तिकल्पितविधिनैहिवसवित्रा द्विवाक्यार्थस्य
ग्रहणादेरस्योद्देश्यपूर्वसाधनत्वनापूर्वसाधनीभूत मन्त्र प्रति द्वा-
रत्वापपत्तेर्मन्त्रप्रकाश्यता युक्तत्येव व्याख्यार्थं मन्त्रत्यादिभाष्यमर्थ-
प्राप्तानामस्मृतानामपि वा फलाभिसंधिसिद्धे स्मारकापेक्षयापूर्वसाध-
नत्वाभावनापूर्वसाधनीभूतमन्त्र प्रतिद्वारत्वायोगादिति विफलत्वनिरा-
सार्थो ऽस्मिन् भाष्यमेव सम्यग्ज्ञरणस्यानुनिष्पादित्वमाशङ्क्य वि-
नाङ्गानिप्रतिबन्धफलार्जनवत्वानमत प्रणिधानादिप्रयत्नापाद्यत्वो-
क्तयन्याद्दितानीत्यादर्शितीयफलपरिहारार्थत्वेन सूत्रावयवव्याख्या-
र्थं इत्येव, व्याख्यातुमाह * कथमिति * गात्रप्राणनेन्द्रियगणावि-
तृप्तिकरत्वात्प्राणात्ययसंस्पर्शप्रत्यासन्नात्ययधर्मादृणमनरूपानेकार्थहेतुत्वा-
त्तस्य ज्ञरणस्य प्राधान्यमुपचर्य समनन्तरपनिमित्तप्रायाधित्वात्तस्य नक-

पपृथग्वाक्यचोदितत्वोक्तिः । प्रायश्चित्तविधेर्लिङ्गमात्रत्वादयुक्तेति
मत्वा लक्षणस्योदरस्थापनरूपप्रतिपत्तित्वात्सम्यग्जरणं विनोदरे स्थित्य-
योगाद्भक्षविधेः सम्यग्जरणपर्यन्तत्वाद्वायं पुरस्तात्प्रत्यञ्चमैन्द्रवा-
यवं भक्षयति पुरस्तात्प्रत्यञ्चं मैत्रावरुणं भक्षयति सर्वतः परिहारमा-
श्विनं भक्षयतीत्यादिभक्षविधिपर्यवसानात्सामान्यशास्त्रैर्वैकीनाभि-
ध सम्यग्जरणस्य चोदितत्वाभिधानमर्थप्राप्तानीत्यतश्च विहितभक्षान्य-
थानुपपत्तिकल्प्यविध्यन्तरचोदितत्वाद्वायमित्येवं व्याख्यातुम् * भ-
क्षेत्युक्तम् * प्रयोजनं चेति सौत्रसमाख्यानोक्तिद्वितीयव्याख्यार्थभा-
ष्योक्तार्थनिरासार्थत्वेनावृत्त्या रूपोक्तिव्याख्यार्थं रूपश्चैवामिति भाष्य-
मैन्द्रीत्यादिवाक्यानां भक्षयामिपदैकवाक्यतानपेक्षरूपं ग्रहणादिप्रका-
शनएव समर्थमित्येवमेकवाक्यतापगमनसामर्थ्यात्मकलिङ्गस्याभिधान-
सामर्थ्यात्मकलिङ्गापेक्षया श्रुतिविप्रकर्षे ऽपि सामान्यान्वयापेक्षितसमा
ख्यानुसारित्वाच्छ्रुतिकल्पकत्वं युक्तं सामान्यान्वयरहितत्वात्त्वितर-
स्य न युक्तमिति नत्विति भाष्येणाशङ्क्य भक्षणस्य स्तुत्यर्थग्रहणादिवैशि-
ष्ट्यप्रकाशने श्रुतेरचोदितत्वेनादृष्टार्थत्वापत्तेः एवसम्भवे चादृष्टा-
र्थत्वायोगादेकवाक्यतोपगमनसामर्थ्यस्य श्रुतिकल्पकत्वानुपपत्तेः
क्वचिन्न्यायेन च कृत्स्नस्य भक्षार्थत्वाभावे ऽपि भक्षानुवाक-
समाख्योपपत्तेः ग्रहणाद्यभिधानसामर्थ्यस्यापि समाख्याविरोधा-
भावाच्छ्रुतिकल्पकता युक्तेत्येवं निरासार्थत्वेन ग्रहणार्थस्यैवानुष्ठेय-
त्वेन प्रकाश्यतयापेक्षितत्वाददृष्टार्थत्वोपपत्तेरनपेक्षितभक्षस्तुत्यर्थत्वे
सत्यदृष्टार्थत्वापत्तेरित्येवमर्थस्य चोदितत्वादिति सूत्रावयवस्यावृत्त्या-
व्याख्यानान्तरार्थं पाठमित्यादिभाष्यं स्पष्टत्वाद्व्याख्यातम् । अथ भक्षा-
नुवाके केषां चिदवयवानां लक्षणे विप्रकर्ष इत्येवमधिकरणार्थोपसं-
हारार्थं तस्मादिति भाष्यं व्याचष्टे * मन्त्र इति * मन्त्रविधायिवा-
क्याभावाद्ग्रहणादिविषयत्वेनोपदेशोक्तिर्व्याख्याता । हिन्वेति मन्त्र-
स्य सम्यग्जरणप्रकाशनशक्तिरस्पष्टत्वमात्रालम्बना प्रौढ्योपदे-
शोक्तिरर्थस्यैवेत्येवकारेण भक्षस्तुतेरचोदितशब्दोक्ता भक्षार्थता व्या-
वर्तिता येन कारणेन ग्रहणाद्यर्थस्य पृथक्प्रयत्नापाद्यत्वेनानुष्ठेयत्वा-
त्प्रकाशनापेक्षितार्थस्य चोदितत्वादिति सूत्रावयवेनोक्ता तेन कारणेन
ग्रहणादेः प्रत्यक्षोपदेशानुदाहरणे ऽपि भक्षविध्यन्यथानुपपत्तिक-
ल्प्यविधिभिश्च ग्रहणाद्युपदेशसम्भवाद्दोष इत्याह * तेनेति * स-
म्यग्जरणस्य च सोमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिन इति वमने
प्रायश्चित्ताम्नानाद्विरेके ऽपि क्वचित्प्रायश्चित्ताम्नानात्तदन्यथानुपप-
त्त्यापि विधिकल्पनसम्भवात्स्पष्ट एवोपदेश इत्याह * सम्यग्ज-

रणं त्विति * दार्ढ्यार्थाशया प्रत्यक्षोक्तिः ॥

अथ मन्द्राभिभूतिरित्यादेः भक्षयामीत्यन्तस्य
एकमन्त्रताधिकरणम् ॥ १० ॥

## गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात् तयोरेकार्थसंयोगात् ॥ २६ ॥

यथार्थनिरूपणमन्त्रोदाहरणभाष्यं सूक्तवाकवदेवेति पूर्वाधिकरणप्रतिकन्यैवार्थोऽव्याख्यातत्वात्सन्देहभाष्यं च स्पष्टत्वादव्याख्याय किं तावदिति पूर्वपक्षभाष्यं पुरोडाशादिभक्षणवत्सोमभक्षणस्यापि द्रव्यप्रतिपत्त्यर्थत्वेऽप्यस्तु अनुष्ठानसामर्थ्याधानरूपभक्षयितृसंस्कारार्थत्वस्यापि तत्समयावसायिना अनुष्ठानसामर्थ्यस्य लक्षणया प्रोत्साहनाद्अनुष्ठेयस्यापि स्वर्गादिवत्प्रकाश्यत्वोपपत्तावभिधानसामर्थ्यात्मकेन लिङ्गेन मन्द्रादेर्भक्षणे विनियोगायोगात्पृथङ्मन्त्रत्वेऽप्यमानत्वेन व्याख्यातुमाह * ग्रहणादिपदेनेति * अपवादत्वेनानन्तरमन्त्रसूचनार्था दृष्टान्तोक्तिः । सोमभक्षणस्यानुषङ्गिकभक्षयितृसंस्कारार्थत्वकल्पनेऽपि भक्षयितृसंस्कारस्य स्वर्गवत्फलत्वाभावतोत्साहनार्थप्रकाशनानर्हत्वात्तर्पणस्य तल्लक्षणार्थत्वहेत्वभावात्तत्प्रकाशकत्वं भक्षय-

न मन्द्रादेर्भक्षणे विनियोगात्तृप्त्यन्तस्य तु मन्द्रादिभागयोरेकतृप्तिफलकभक्षणरूपार्थे संयोगात्तर्पयतेर्भक्षणगुणत्वेन तृप्त्यभिधानादेकमन्त्रमन्द्रादिरेक एव मन्त्र इत्येवं सूत्रस्यार्थमेवमित्यादिभाष्यं तात्पर्यतो व्याचष्टे * इतीति * श्लोकं व्याचष्टे * ग्रहणादीनीति * तयोरेकार्थसंयोगादिति सूत्रावयवव्याख्यार्थं भक्षयामि यावत् तर्पयतीत्यादिभाष्यशेषं सङ्क्षेपतो व्याचष्टे * तस्मादिति * लोट् प्राप्तकालार्थत्वे प्रार्थनार्थत्वे वा तर्पयत्वित्येतदर्थं भक्षयामीत्येकवाक्यत्वोपपादनार्थं तर्पणक्रियार्थत्वेऽपि भक्षणक्रियायामुपपदभूतायां स्मृता तर्पयन्त्वीति भविष्यन्त्याख्यातं लट्विभक्तिर्भाष्ये प्रयुक्ता ॥

८०३।१

इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषु
ऊहेन विनियोगाधिकरणम् ॥ ११ ॥

## लिङ्गविशेषनिर्देशात्समानविधानेष्वैन्द्राणाममन्त्रत्वम् ॥२७॥

मन्द्रादिर्मन्त्रो लिङ्गेन भक्षणे विनियुज्यत इत्युक्ते प्रसङ्गात्कि-
मैन्द्रसोमभक्षणेष्वेव विनियुज्यते सर्वेषु वा सोमभक्षणेष्विति चि-
न्तायामापाद्य समासैकमधिकरणसन्देहहेतुश्चेन्द्रपीतशब्दः किमिन्द्रेण
पीत इति तृतीयासमासत्वात्सोमवाची किंवेन्द्रेण पीतमस्मिन्निति
बहुव्रीहित्वात्सवनवाचीति सन्देहे तल्लिङ्गविशेषनिर्देशादैन्द्रा-
णाममन्त्रत्वमित्येतावत्सूत्रमन्यपदार्थप्रधानबहुव्रीह्यपेक्षया स्वपदार्थे
प्राधान्यात्तत्पुरुषस्य बलीयस्त्वप्रतीतेर्विशेषतश्चास्य व्यधिकरणत्वेन
बहुव्रीहित्वायोगादिन्द्रपीतस्येत्येन्द्रलिङ्गनिर्देशादैन्द्रसोमभक्षणानां
लिङ्गविनियोज्यमन्त्रविषयतास्त्येव पूर्वपक्षार्थे समानविधाने ऽनै-
न्द्राणाममन्त्रत्वमित्येतावत्त्वाद्वैकदेशमैन्द्राणां च प्रदानानां धर्मप्रा
हैकज्योतिष्टोमावयवत्वेन समानविधाने प्रकृतिविकारभावाभावेनो-
द्दायोगादनैन्द्रसोमभक्षणानां श्रूयतेत्येव पूर्वपक्षप्रयोजनं तत्त्वार्थमिति
सर्वं सूचयितुमाह * इन्द्रपीतस्येति *

## यथादेवतं वा तत्प्रकृतित्वं दर्शयति ॥ २८ ॥

लिङ्गेन मन्त्रस्यानैन्द्रसोमभक्षणे विनियोगाभावे ऽपीन्द्राय त्वा
वसुमते गृह्णामीतीन्द्रलिङ्गेन मन्त्रेण सोमग्रहणादिन्द्रलिङ्गेनैव च सा-
मानाद्विधानेन त्रैवर्णिकविषयत्वनियमात्तत्साध्यानां क्रतूनां त्रै-
वर्णिकविषयत्वनियमवन्मन्त्रलिङ्गादग्नीषोमीयस्य चाङ्गत्वनियमव-
त्सोमस्य मानग्रहणयोरिन्द्रलिङ्गमन्त्रनिर्देशादैन्द्राणामेव प्रदानाना-
मौपदेशिकधर्मवत्त्वावगते सोमेन यजेतेत्यस्यापि मन्त्रालोचनयै-
न्द्रेण सोमेन यजतेत्येवमर्थत्वावगते कर्मैक्ये ऽपि चाभ्यासानां भे-
दस्यावश्यप्रकृतिविकारभावोपपत्ते सर्वेषां प्रदानानां समानविधान-
त्वाभावादनैन्द्रसोमभक्षणानां यथादेवतं मन्त्रवत्त्वमित्येव पूर्वपक्षप्रयोज-
नाक्षेपार्थत्वेनैतत्सूत्रं व्याख्यातुमाह * अनैन्द्रेष्वपीति * प्रयोगास्त्वा
पूर्वपक्ष प्रयोजनात्कथयन्पूर्वसूत्रावयवो कामन्त्रकत्वनिरासार्थत्वेन वा
शब्दं व्याख्याय विकृतित्वादित्यनेनानैन्द्राणां प्रतियोगित्वेनाप-
स्यापिनैन्द्रप्रकृतित्व हीतिसूत्रावयवो व्याख्यातः । कर्मैक्यात्प्रकृति-
त्वायोगमाशङ्क्याह * समाने हीति * अनैन्द्राणां विकृतित्वप्रकृति
कत्वपक्षायामाह * ध्रुवेति * लिङ्गविशेषनिर्देशादिति पूर्वसूत्रा-
वयवमनुषज्यैन्द्राणां प्रकृतित्वोपपादनत्वेन हेतुप्रश्नपूर्वं व्याख्यातु-
माह * कथमिति * कथं गुणभूतमन्त्रानुरोधात्कथं प्रधानभूतप्रदान-
त्वत्रस्येत्याशङ्क्याह * भवति हीति * प्रकृतिविकारभावमुपसंहरति *
तनति * प्रकृतिविकृतित्वोपपादनस्योद्दापयामुपसंहरति * ततश्चेति

* प्रकृतिविकारभावलिङ्गस्याप्रयोगात्प्रकृतित्वे हि दर्शयतीत्याशङ्क्य। एकदेशसूत्रावयवोक्तं लिङ्गदर्शनं व्याचष्टे *तथा चेति * अग्निष्टोमा- न्तानां प्रदानानां समानविधानत्वे ऽपि संस्थां परमतेन तावत्परिहरति * संस्थानां चेति* स्वमतेन विकारत्वे ऽप्यूहानुवादस्य लिङ्गत्वोपपत्तिं

८०२।। शङ्कापूर्वमाह * नन्विति* अग्निष्टोमप्रदानसामान्यपक्षे सति संस्था- नाधिकारान्वयिनि यथाप्रकृतावग्निष्टोमप्रदानसामान्येऽपि पक्षे सति संस्था- नाधिकारान्वयि यथाप्रकृतावग्निष्टोमसंस्थायां सर्वेषां त्वैकमन्त्र्य स्या- दिति सिद्धान्तन्यायेनानूहितप्रयोगस्तथा विकृतावपि षोडशिन्यतिरात्रे चादित्यग्रह गणस्य तृतीयसवने ऽप्य जगतीच्छन्दः पितृपीतशब्दस्यानू- हितप्रयोगसम्भवायोहानुवादो युज्यते येन्द्रप्रदानानां तु प्रकृतावेव यथा प्रातः सवनीयेष्वैन्द्रेषु प्रदानेषूहितस्तथा तार्तीयसवनिकष्व- ग्निष्टोमादिष्वपि पित्र्येषु प्रदानेषूहितस्याषोडशिन्यतिरात्रयोस्तृती- यसवनीययोरपि पितृदेवत्ययोः प्रदानयोरूहदर्शनं युक्त- मित्यर्थः। पूर्वपक्षे ऽन्यदेवत्यसोमभक्षणेनाममन्त्रकत्वे ऽपि समानविधानत्वस्य पूर्वसिद्धान्तपक्षयोस्तुल्यत्वम्। इन्द्रलिङ्गानां दसीभूतसोमग्रहणाद्यादित्यप्रयोगमुभयाभिमतमाक्षेप्तुमसमानविधि- त्वेनाक्षिप्तमोहशङ्कायां सङ्गतिलाभायन्द्रपीतशब्दस्य सोमवि- षयत्वाभ्युपगमेनानैन्द्रेषु भक्षणमन्त्रोहस्य शङ्कितत्वाल्लिङ्गदर्शनाप- त्तिः। समानविधानत्वं ऽप्यनुष्टुप्छन्दःशब्दयुक्तं भक्षमन्त्रं करोतीति भक्षमन्त्रे ऽनुष्टुप्छन्दःशब्दविधानपूर्वपक्षन्यायेन या षो- डशिनि पितृदेवत्यं पितृपीतशब्दयुक्ततार्तीयसावनिकभक्षम- न्त्रप्राप्तेरनुष्टुप्छन्दःशब्दयुक्तभक्षमन्त्रविधानात्प्राप्तस्योहस्य धातुना ऽनुवादः भविष्यतीत्याशङ्क्याह * विशिष्टेति * जगतीकार्ये षो- डशिन्यनुष्टुब्विधौ सत्यनुष्टुप्छन्दःशब्दस्यार्थितस्य मन्त्रांशस्यार्था- द्विधिरूहानुवादः ऽध्यवसीयते तदभावानुसारेण सति तदनु- ष्टुप्छन्दः स इत्यवमूहविशेषरूपेण विधिरप्यनुष्टुप्छन्दः पदमपेक्ष्या- प्यविपरिणामव्यपदेशो युज्यते ननु स्वरूपेण विधित्सितमनुष्टुप्छ- न्दःशब्दमपेक्ष्य ततश्चानुष्टुप्छन्दःशब्दस्योहत्वे प्रमाणाभावात्तद्वि- धावप्यूहस्याप्राप्तत्वादनुवादोपपत्तिरित्याशय। इष्टपदेनिपाठ त्वनुष्टुप्छन्दःशब्दस्योहानुवादार्थं नामतीति पदमपेक्ष्य पश्चाद्विधौ सति विपरिणामव्यपदेशो युज्येत ननु विधित्सितमनुष्टुप्छन्दःश- ब्दमपेक्ष्य पश्चाद्विपरिणामव्यपदेश इत्यर्थः। पूर्वपक्षप्रयोजनाक्षेपमु- पसंहरति * तस्मादिति *

अभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम्॥ १२॥

## पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥

ऊहोक्तेः पूर्वपक्षप्रयोजनमात्रार्थत्वेनास्थायित्वादूहविशेषचिन्ता न युक्तेत्याशङ्कोहव्याजेन पुनरभ्युन्नीतयागे पूर्वशेषस्य हि तस्य पुनरभ्युन्नीतस्य सोमस्य विनियोगो ऽभ्युन्नीतमात्रस्य वेति चिन्तार्थं कृत्वाचिन्तयोहविशेषचिन्तोपपत्तिसूचनार्थमेवमिति भाष्यं व्याचष्टे * एवमिति * पूर्वपक्षप्रयोजनाक्षेपः पूर्वपक्षोक्त्या विवक्षितः। ऊहनिरस्ते सद्विशेषचिन्तानवसरापत्तेरस्य चिन्तान्तरोपपत्तिसूचनार्थ- श्चकारः कृत्वाचिन्तयोक्तोहस्थायित्वे ऽपि मन्त्रिमंथेण संसर्गिद्रव्यस्य निष्कर्षसामर्थ्यं कृत्स्नस्य पात्रस्य पुनरभ्युन्नीतयागाङ्गत्वे बुद्धा वा निष्कर्षशक्तेः पुनरभ्युन्नीतमात्रस्येति निष्कर्षसामर्थ्यात्मकलिङ्गहेतुकशेषचिन्तात्मकस्यास्य पादलक्षणसङ्गतचिन्तोपपत्तिः सूचिता। पुनरभ्युन्नीतोक्तिं व्याचष्टे *इन्द्रस्येति* पुनरभ्युन्नीतत्वोक्त्युपपादनार्थं तेषामित्यादि तत्रस्यादिचोहचिन्ताविषयत्वोपपादनार्थं भाष्यमवतारणपूर्वं व्याचष्टे *तेषामिति* ब्रह्मयजमानहोतृउद्गातारो मध्यतः कारिणः मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राच्छावाकानां चमसा मध्ये ऽच्छावाकचमसे पुनरभ्युन्नयनाभावादनैन्द्रत्वे ऽप्यूहविषयत्वानुपपत्तेः नाच्छावाकयाज्या दर्शिता। ब्राह्मणाच्छंसियाज्यायाश्चैन्द्रत्वे ऽपि कियतः सोमस्य विनियोग इति चिन्तोपयोगित्वात्प्रदर्शनं संसर्गिद्रव्यत्वेन शेषभेदानवगमात्स्थेयत्वेति भाष्यावयवमयुक्तमाशङ्क्य बुद्ध्या निष्कर्षसम्भवसूचनार्थम् * दृश्यते इत्युक्तम् * तत्रेति सन्देहभाष्यं व्याचष्टे * तत्रेति * शेषस्य देवतयोपलक्षणे क्रियमाणे तदुपलक्षणार्थत्वेन प्रचिताऽपीन्द्राख्या देवता कीर्तयितव्या न वेति कीर्तनाख्यप्रकथनधात्विकरोत्यर्थे तव्यप्रयोगाच्छेषोपलक्षणायैन्द्रः कीर्तयितव्य इत्येवं उपलक्षणत्वोक्तेर्व्याख्यातत्वादैन्द्रपदोहो ऽनेनोक्तः येनेन्द्रपदस्य प्राकृतत्वादिन्द्रामित्रावरुणसमुदायस्य च देवतात्वाभावेनेन्द्रमित्रावरुणपदस्यैन्द्रामित्रावरुणपदस्यैन्द्रपदस्थाने प्रयोगायोगात्सिद्धान्तवचनव्यक्त्यायोगः शङ्क्येत द्वयोस्तु प्रदानयोः प्रत्येकं भक्षमन्त्रप्राप्तावैन्द्रे प्रदाने प्रकृतित्वादविकृते मित्रावरुणपीतस्येत्येवमित्युक्तम्। अतिकान्तयागान्वयाद्येन्द्रस्यातिक्रान्तता प्रक्षिप्तोक्तिव्याख्यानायोक्ता। शेषद्वयसद्भावे पूर्वपक्षायोगात्सन्देहायोगं शङ्कते * कुत इति * पूर्वदेवतान्वयापनयानयनसन्देहात्सन्देहमुपपादयितुमाह * किमिति * भक्ष्यमाणस्य सोमस्य द्वयोर्देवतयोः शेषत्वादिन्द्रस्य मित्रावरुणादीनां शेषोपलक्षणार्थं कीर्तनाख्यं प्रकथ-

८०३।१

नमित्येव प्रकथनशाचिन. करोतेरर्थे ल्युट्प्रयोगात्स्पष्टार्थं सूत्रम-
सिद्धान्तार्थत्वमात्रेण व्याचष्टे * किमिति *

## अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३० ॥

पूर्वपक्षहेतुपूर्वदेवतापनयसिद्धौ पात्रस्य कृत्स्नस्य सोमस्येन्द्र हविरिन्द्रमुद्दिश्य देवतायै श्रावितायै श्रावयेति मन्त्रेणाश्रावणप्रेपणादेस्तु श्रौपदित्वेन देवता प्रत्याश्रावणे कृत्स्नस्य देवतान्तरसंश्रारे मित्रावरुणादिभाग इति भागेनान्ते देवतान्तरोद्देशेन गृहीतमात्रस्याप्याश्रावणादिसम्बन्धात्कथं कृत्स्नस्याश्रयणं गम्यतइति पूर्वे प्रदानकालीनत्वाद्धाश्रयणादीना च संसर्गिद्रव्यत्वेन विवेकाप्रतीतेरित्येवमुपपत्तिसूचनार्थं मित्रावरुणाद्ययन्तदेव इतिमन्वे इत्यध्याहारसहितेनात्तमित्यन्त भाष्यं व्याख्यातुमाह * आश्रावयेति * होता यक्ष्मिश्रावरुणेत्यादिप्रैषान्तानुवचनग्रहणायादिशब्दः प्रदानकालीनैराश्रवणादिभिरिति हेतुगर्भितं विशेषणम् । अपनीतपूर्वदेवतान्वयस्यापि देपस्य भूतपूर्वगत्योपलक्षणं भविष्यतीत्याशङ्कानिरासमूचनार्थत्वेन दृष्टान्तभाष्यं व्याख्यातुमाह * न चेति * पूर्वस्यन्द्रस्य विशेषापलक्षणार्थत्वेन कीर्तितमित्यथ पूर्वपक्षप्रतिज्ञार्थसूत्रावयवव्याख्यार्थं तस्मादिति भाष्यं व्याचष्टे * तस्मादिति *

## अग्रहणाद्वाऽनपायः स्यात् ॥ ३१ ॥

पूर्वपक्षहेतुनिरासप्रतिज्ञार्थसूत्रावयवव्याख्यार्थं नचेत्यादिना साधनीयमित्यन्त भाष्यं व्याचष्टे * अथ वेति * देवतान्तरोद्देशेन पूर्वस्य सकृद्गृहीतस्य शेषस्याग्रहणादिति एवमनपनयनिरासोपपादनार्थत्वेनाग्रहणादिति सूत्रावयवं पूर्वसूत्रस्य पूर्वपक्षव्दशरूपार्थान्तरपरामर्शार्थत्वेनानुषज्य व्याख्यार्थं सकृदित्यादिभाष्यं प्रश्नपूर्वं तात्पर्यतो व्याचष्टे * कुत इति । या देवतामुद्दिश्य यत् द्रव्यं गृह्यते तस्या देवतायास्तदेव द्रव्यं गृह्यते तस्या देवतायास्तदेव द्रव्यं सम्बन्धीत्युक्ते ऽन्यायुद्देशनापि निरूपाना सवनीयहविषामथैतथा हविरिमिन्द्रमेव यजतीति देवतान्तरान्वयश्रवणाद्यामुद्दिश्य यद्गृह्यते तत्स्रस्य शेति नियमायोगमाशङ्क्य न्यादीन् प्रति स्वत्वापादकत्यागयाद्युद्देशेन त्याग स्यात्सवनीयहविषामभावनाग्न्यादीन्प्रति स्वत्वाभावात्स्वस्वामिभावलक्षणाग्न्यादिसम्बन्धाभावो युक्त इति वैषम्यसूचनार्थं या प्रति स्वत्वन* प्रयाजनन न गृह्यतइत्युक्तम् * श्लोकं व्याचष्टे * शास्त्रेति * एवमपि पु-

नरभ्युन्नीतमात्रं देवतान्तरोद्देशार्थत्वेन गृह्यते ननु पूर्वैवेति कथमवसीयत इत्याशङ्क्य सकृद्धुतचमसाभिमुख्येन पुनरभ्युन्नीतसामग्रहविधानात्सकृद्धुतसोमशेषस्य ग्राह्यद्रव्याधारभूतपात्रोपलक्षणमात्रता ऽवसीयत ननु ग्राह्यत्वेनेत्येवं परिहारार्थत्वेन तदेव भाष्यं व्याचष्टे * इह चेति * यत्त्विति भाष्येणापन्नयोपपादनशङ्कामनुभाष्य ग्रहणकालावगतभेदानुसन्धानेन प्रदानकाले सकृद्धुतस्यापि बुद्ध्या निष्कृष्टुमशक्यत्वात्पुनरभ्युन्नीतमात्रस्याग्रहणादिविषयतावसीयते ननु कृत्स्नस्य पात्रस्थस्येत्येव परिहारार्थमुच्यत इत्यादिगम्यत इत्यन्त भाष्यं व्याचष्टे *यथा चेति * यथा गृहीतोक्त्या सकृद्धुतस्यापि ग्रहणकालीनविवेकावगतानुसारादेकपात्रगृहीतयावद्द्रव्यावयवसामग्र्य बुद्ध्या निष्कर्षं सूचितं । देवतोद्देशपूर्वकद्रव्यत्यागाख्यसङ्कल्पापादकत्वात् द्रव्यदेवतान्वयस्य तस्य च होमाख्यप्रदानकालीनत्वावसरा च सकृद्धुतत्वात् कृत्स्नस्यैव देवतान्तरान्वयो गम्यत इत्याशङ्कानिरासार्थं नाश्रावणेति भाष्यं देवतान्वयस्य प्रदानकालीनतायाः निराकर्त्तुमशक्यत्वादयुक्तमाशङ्क्य यद्देवतोद्देशेन यत् द्रव्यं त्याज्यत्वेन गृहीतं तस्यैव प्रदानकाले तद्देवतान्वयप्रत्येयमर्थत्वेन व्याख्यातुमाह * न चेति * प्रदानकाले कृत्स्नविषयरूपसङ्कल्पान्तराभावे ऽपि पुनरभ्युन्नीतसामसङ्कल्पनैव सकृद्धुतस्य विवेकग्रहणाशक्तं प्रसङ्गात् कृत्स्नं सोमो विषयीकरिष्यत इत्याशङ्क्य यद्देवतासम्बन्धित्वेन ग्रहणकाले सङ्कल्पितं तदेव प्रदानकाले बुद्ध्या निष्कृष्य ध्यायत इत्येवं परिहारार्थं यदीति भाष्यं व्याख्यातुमाह * न चेतरेति * यथागृहीतोक्तिसूचितो निष्कर्षसम्भवो विभक्तोक्त्या प्रकटित । उपाकरणकाले कृत्स्नस्य पशोर्देवतायै सङ्कल्पनाद्ग्रहणकाले पूर्वशेषस्यागृह्यमाणत्वेन ग्रहणकालीनसङ्कल्पानर्हत्वात्पुनरभ्युन्नीतमात्रसङ्कल्पे ऽपि प्रदानकाले कृत्स्नसङ्कल्पाविरोधाङ्कुरेन निष्कृष्य पुनरभ्युन्नीतमात्रत्यागरूप सङ्कल्पो न युक्त इत्याशङ्क्याह * न च प्रदानेति * ग्रहणकालदेवतोद्देशनेदं त्यक्ष्यामीति सङ्कल्पितस्यैव प्रदानकालदेवतान्वयापादनायेदं न ममेति त्यागरूपः सङ्कल्पः न कृत्स्नविषयः सङ्कल्पो ऽस्ति पूर्वशेषस्य कस्याश्चिद्देवतायै सङ्कल्पितस्य सकृत्यागायोगेन च विना पूर्वदेवतानो यहत्यान्यस्य सङ्कल्पयितुमशक्यत्वात् कृत्स्नसङ्कल्पानुपपत्तिरित्यर्थं एतदेवोपसंहरति * तस्मादिति * त्यागरूपस्य मानसस्य सङ्कल्पस्य यजिवाच्यतया मात्रार्थाधिकरणोक्तस्य प्रदानकालीनयो प्रसिद्धत्वात्कृत्स्नसङ्कल्पनिरासपरत्वेन व्याख्येयम् । देवताया भोक्तृत्व

८०४।२

प्रतिगृहीतृत्वाभावे ऽपि सोमाय यजत इत्यादिषु सम्प्रदानव्यवहा-
रसिद्ध्यर्थमनिराकरणात्त्यागानुमननव्यापाराभ्युपगमात्संसृष्टे च विवि-
क्त्यानुमननाशक्तेः पूर्वशेषस्य देवतान्तरोद्देशेनात्यागे ऽपि देवतान्त-
रैरुपाश्रयकृत्स्नभोगानुमननावगमात्पूर्वदेवतावषट्कृतस्य देवता-
न्तरैरात्मीयत्वेनानुमन्तुमशक्यत्वात्पूर्वदेवतातो ऽपनयो भविष्यती-
त्याशङ्क्याह * यद्यपि तावदिति * मुख्यमांसस्य नवमे निर्णेतव्य-
मानत्वेनानाशङ्कनीयत्वादनिराकरणे चाव्यापारात्मकत्वादननुष्ठेये
भुञ्जीतेति कर्तृत्वव्यपदेशायोगादुपांशुयाजाधिकरणवार्त्तिकोक्त-
निराकरणापादितः स्वीयत्वानुमननव्यापारो भुजिना लक्षितः[1] । अ-
नपनयनोपसंहारार्थं तस्मादिति भाष्यं पूर्वशेषस्य देवतान्तरान्वयि-
त्वेनासङ्कल्पे ऽप्यग्नौ किं च प्रक्षेपस्यावर्जनीयतया निराकर्तुमश-
क्यत्वादग्निमुखा वै देवा इत्याद्यर्थवादालोचनया चाग्नौ प्रक्षेपस्य
देवतान्तरान्वयापादकत्वप्रतीतेर्देवतान्तरान्वयेन पूर्वदेवतातोऽपनया-
द्यदयमभावाद्युक्तमाशङ्क्योपपादयितुमाह * तत्रेति * देवतोद्देशेन
त्यागं विना नाग्नौ प्रक्षेपमात्राद्देवतान्वयोपपत्तिरित्याशयः । नान्त-
रीयकतया भक्ष्यमाणस्यापि पूर्वशेषस्य प्रत्यवसानेन भक्षणेन प्रतिपा-
द्यमानत्वात्प्रतिपत्त्यर्थे च भक्षणे मन्त्रापेक्षणाच्च पूर्वदेवतोपलक्षणं
युक्तमित्याशङ्क्य पुनरभ्युन्नेष्यमाणे सोमसंस्कारार्थे होमान्तरं क्रि-
यमाणस्य पूर्वशेषस्य पुनरभ्युन्नीतभक्षकालत्वे भक्षणावसरात्प्रति-
पत्त्याविरोधसूचनार्थं भक्ष्यते चेति भाष्यं व्याचक्षाणो ऽत इति
भाष्यं व्याचष्टे * यस्त्विति * कृत्वेतिभाष्यमुक्तकृत्याचिन्ताया भक्ष-
णासङ्गतेर्भक्षणसंस्कृतस्य प्रयोजनस्यावश्यवक्तव्यत्वादयुक्तमाशङ्क्य
पूर्वपक्षे कृत्स्नस्य मित्रावरुणाद्युद्देशेन त्यागः सिद्धान्ते पुनरभ्युन्नी-
तमात्रस्येति लक्षणसङ्गतं प्रयोजनं पूर्वशेषापनयविचारात्प्रसिद्धमि-
त्येवं परिहारं सूचयितुमाह * इतीति * अधिकरणसमाप्त्या वक्त-
व्यतयोपस्थापितस्य प्रयोजनस्येति करणेन परामर्शः ॥

पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ॥ १३ ॥

## पात्नीवते तु पूर्ववत् ॥ ३२ ॥

आग्रयणाख्यसोमपात्रस्योपांश्वाख्यस्य पात्रे गृहीतस्य
पात्नीवतयागाङ्गस्य किं वा ऽग्रयणाद् गृहीतस्य सोमस्य पात्नीव-

---

( १ ) देवताया भोजनादिरनुमननं ऽपि [illegible] अधिकरणवार्त्तिकोक्ता[illegible] पा० १ पृ० ५० ।

दन्यये ऽनाग्रयणस्याप्याग्रयणसंसृष्टत्वसामर्थ्याद् ग्रहणापरया पत्नीवदन्ययापत्तः कृत्स्नस्याग्रहणादुपांशुपात्रे गृहीतस्य पात्नीवत्वेन यागाद्वतेत्यूह कृत्वा चिन्तामिमेयणाभिप्रेतायाश्चिन्तयाः पादलक्ष्यां सङ्गतिं स्पष्टत्वादनुक्तानन्तरसङ्गतिमाह * पूर्वेति * ऊहचिन्ताविषयत्वोक्त्यर्थं द्विदेवत्यानां हीतिभाष्यमादित्यदेवतान्तस्य सोमस्य स्थाल्यां द्विदेवत्यशेषनिक्षेपादयुक्तमाशङ्कोपपादयितुमाह * द्विदेवत्यानामिति * आग्रयणदेवताभूतानां विश्वेषां देवानामुपलक्षणं कस्मान्न चिन्त्यतइत्याशङ्का तदपनयस्य नि सन्दिग्धत्वादित्येवं परिहारसूचनार्थं तत इति भाष्य व्याचष्टे * ततश्चेति * अथेति सन्देहभाष्यमवयवव्याख्यापूर्वं पात्नीवते सोमः पुनरभ्युन्नीतयत्सर्वेषामुपलक्षणमित्येवं पूर्वपक्षसूत्र व्याचष्ट * तस्येति * वाश्विन्द्रवायु मित्रो वरुणोऽभिपत्नीवत्पीतस्त्येवमूहमवचनायादिशब्दः इन्द्रवायुग्रहण तूपलक्षणार्थम ॥

## ग्रहणाद्वा ऽपनीतं स्यात् ॥ २ ३ ॥

वा शब्दप्रतिज्ञातपूर्वदेवतानुपलक्षणहेतुत्वेनापनीतोकिंग्याययार्थमपनीयते हीति भाष्य व्याचष्टे * नैतदिति * द्विदेवत्यशेषस्य पूर्वदेवतातोपनयोपपादनार्थत्वेन तस्यापि पत्नीवतग्रहणकाले एव ग्रिदेवत्यशेषस्याग्रयणसंसृष्टत्वात्सोऽपि पूर्वदेवतातो ऽपनीयतइति ग्रहणोत्तरकालसंसृष्टादिन्द्रशेषाद्वैलक्षण्ये पूर्वार्द्धेनोक्तग्रहणकाले ससृष्टत्वे ऽपि द्विदेवत्यशेषस्याग्रयणस्थाल्यां निक्षेपकाले विवेकावगमात्तदनुसन्धानेन बुद्ध्या निष्कर्षोपपत्तेराग्रयणस्यैव देवतान्तरोद्देशेन सङ्कल्पात्सद्विदेवत्यशेषस्य पूर्वदेवतानयनस्य इत्याशङ्काग्रयणापेतस्य देवतान्तरोद्देशेन सङ्कल्पनीयत्वादनाग्रयणीयस्यापि वाग्रयणससृष्टत्वेनाग्रयणविषयस्य बुद्ध्या निष्कर्षसम्भवे ऽपि पारयितुमशक्यत्वादनाग्रयणस्यैवाग्रयणस्य देवतान्तरोद्देशेन सङ्कल्पविध्युक्त्या वक्ष्यमाणग्रहणभाष्योपपादयिष्यमाणया ऽपनय समर्थितः । श्लोक व्याचष्टे * आग्रयणेति * स्थालीनिक्षेपकालीनस्य विवेकस्य सङ्कल्पे ऽनपेक्षणादाग्रयणविषयस्य सङ्कल्पस्य प्रसङ्गादनाग्रयणविषयत्वासिद्धिः पुनरभ्युन्नीतवचनद निवर्त्येति पूर्वार्द्धव्याख्यानायोक्ते किमुनेत्यनेनोत्तरार्द्धं व्याख्यातम । ग्रहणकाले ऽपि ससृष्टस्य बुद्ध्या निष्कृष्याग्रयणमात्रस्य सङ्कल्पसम्भवं नन्वितिभाष्येणाशङ्क्य बुध्या निष्कृष्याग्रयणमात्रसङ्कल्पसम्भवे ऽप्याग्रयणापेतस्य सङ्कल्पविधानादाग्रयणानाग्रयणयोश्च ऽऽग्रयणा- ८०५॥

पेतत्वाविशेषात्कृत्स्नसङ्कल्पोपादनार्थमुच्यतइति भाष्यं व्याचष्टे * तथा हीति * एष आग्रयणो व्रीहिदेवत्यशेषश्चाग्रयणादपैतीति तेन शेषश्चैषश्चैष च ग्रहणकाले सङ्कल्प्यतइत्यर्थः । व्यतिरेकतोऽन्वयतश्च श्लोकं व्याचष्टे * यदि हीति * आग्रयणस्य पात्नीवतत्वविधौ सम्पृष्टो ऽपि व्रीहिदेवत्यशेषो ऽनाग्रयणत्वाद्बुद्ध्या निष्कृष्य सङ्कल्पविषयत्वाद्व्यावर्त्येतेनेतिव्यतिरेकतो व्याख्या। आग्रयणापेतस्य तु पात्नीवतत्वविधानादपादानस्य च सूक्ष्मत्वादपदत्वविशेषानपेक्षत्वात्सम्पृक्तयोः सशब्दवाच्यैकीभावपूर्वाग्रयणस्थालीपातनिमित्तसम्पातशब्दवाच्यव्रीहिदेवत्यशेषाग्रयणयोर्मध्ये य एषाग्रयणाच्चापैति तस्य सर्वस्याग्रयणादपेतत्वादपेतत्वमात्रस्य सङ्कल्पनिमित्तत्वात्सर्वं सङ्कल्प्य इत्युपनीयते । इत्यन्वयतो व्याख्या आग्रयणविशेषणविशेष्यबलादाग्रयणादपैत्यवधारणप्रतीतेरनाग्रयणस्य चाग्रयणमिश्रस्यानाग्रयणादप्यपेतत्वेनानाग्रयणादपैत्यवधारणविषयत्वायोगादपात्नीवत्त्वं न त्विति भाष्येणापङ्क्ताग्रयणस्याप्याग्रयणमात्रादपायाशङ्कोराग्रयणादपैत्यवधारणायोगाद्वाग्रयणभावदपेत इत्यतावन्मात्रेण विशेषणत्वप्रतीतेर्व्रीहिदेवत्यस्यापे ऽस्यापि ताद्रूप्यविधानात्पात्नीवत संपादनार्थं नैव इति भाष्यं व्याख्यातुमाह * यदि चेति * अनाग्रयणादपेतो न पात्नीवत इति निषेधवचनाभावात्तत्स्वधार्थवचनकल्पने चाग्रयणात्व्यपेतत्वेन पात्नीवतत्वापत्तेरनाग्रयणापेतस्य पात्नीवतत्वापत्तेरनाग्रयणापेतस्य पात्नीवतत्वनिषेधाभावेन विध्यभावेऽपि निषेधेऽपि विषयत्वलक्षणोपयोगाभावादुभयोरपि पात्नीवतत्वविधौ विरोधाभावादाग्रयणमात्राच्चोपायायोगानाग्रयणादपैत्यवधारणस्याशक्यत्वादयोगव्यावृत्त्यापि च विशेषणत्वसम्भवेनावधारणस्याप्रमाणकत्वाद्वाग्रयणाभावादपैत इत्यत्र विशेषणत्वप्रतीतद्वयोरपि देवतान्तरान्वय इत्यर्थः । देवतान्तरोद्देशेन ग्रहणेन पूर्वदेवतातोऽपनयः कथमवसीयतइत्याशङ्क्याह * न चेति * अन्यस्य दातुमशक्यत्वात्पूर्वस्यैव देवतायै दत्तस्य तत आच्छिद्य स्वीकारं विना स्वत्वानापत्तेर्देवतोद्देशेन च त्यागाच्च देवताव्यतिरिक्तस्य यथेष्टदेवतानर्हस्वरूपस्य देवतास्वत्वापादाने ऽपि देवताया प्रतिग्रहीतृत्वाभावेन यथेष्टविनियोगात्क्रत्वलक्षणस्वाम्यानापादनकृतापहरणे ऽपि परस्वापहरणनिमित्तदोषाप्रसक्तेः पुनर्विनियोगस्यान्यथानुपपत्त्या पूर्वदेवतातो ऽपहृत्य स्वीकारश्चाथ कल्पयितव्य इत्याशय । पूर्वदेवतातो ऽपनये ऽपि पूर्वदेवतोद्देशेन त्यक्तत्वस्य तत्प्रीत्यादिलक्षणस्यानपायादनपनीतापि देवतोपलक्षणीयस्य

शब्दप्रतिज्ञातपूर्वदेवतानुपलक्षणायोगमाशङ्क्य चतुर्थ्यां देवतामुद्दि-
श्य द्रव्यत्यागाभिप्रवृत्तस्यागभक्षणार्थतायामिन्द्रपीतशब्देन लक्षणा-
ननुगतचतुर्थीसमासापत्तेरिन्द्रेण स्वीकृतमन्यस्य यथेष्टविनियोगा-
नर्हीकृतमत्यानिराकरणनिमित्तान्यस्य यथेष्टविनियोगानर्हीकरणपर-
स्वीकारलक्षणार्थत्वावगतेरपनयं चान्वयनाशाशापनीता देवतोपल-
क्षणीयस्य चाशब्दोपपादनार्थं तत्रत्यादिभाष्यतात्पर्यतो व्याचष्टे * इ-
तोति * पूर्वं गणकनाचार्येशेषभुक्ते सदस्यैर्भुज्यमाने यथा ऽऽचार्यशापो
पनीतान्वयत्वाश्चापलक्षणं तथा पूर्वदेवनापीत्यर्थः । नन्वित्याशङ्काभा-
ष्यमपनयन पूर्वदेवनार्थत्वनाशादयुक्तमाशङ्क्य व्याचष्टे * नन्विति *
नतीति परिहारभाष्यमिन्द्रवाय्वाद्युद्देशेन गृहीतस्य कृत्स्नस्य पात्र-
स्थस्य पूर्वदेवतार्थस्यावयवदर्शनमवू पुनर्मात्रस्य देवतार्थत्वेनानाश-
ङ्कितस्यावयवादर्शने ऽप्याशङ्काया अनिरासादयुक्तमाशङ्क्यापहासार्थ-
त्वेन व्याचष्टे * आचार्यास्त्विति * अनिरस्तावयवस्यापहासानर्हता-
माशङ्क्यानपनीतपूर्वदेवतान्वयात्पूर्वदेवतापीतत्वेनोपलक्षणार्हस्य हु-
तावयवस्यादर्शनमितरस्यानीतत्वेनानुपलक्षणीयत्वसिद्ध्यै मयाऽप-
मानमभ्युपपादनफलशमनापायापशाङ्कितास्वयमेव यथाऽभ्युपगच्छति
तथा करोमि ततश्चादिनानुवादित्वादुपहासार्हो भवि-
ष्यतीत्येतस्वयमाशङ्कितारमभ्युपगमयामीत्यनेनोक्तम् । कस्तर्हि प
रिहाराशय इत्याशङ्क्याह * न हि हुतादिति * इन्द्रवाय्वाद्युद्देशेन हु ८०६।१
तादन्यदुपांशुपात्रगृहीतमिन्द्रवाय्वादिसम्बन्धि न विद्यते अप-
नीतत्वादित्यर्थं हुतावयवादर्शनस्यानुपलक्षणहेतुत्वाभावाशङ्कार्थे न
न्विति भाष्यम् अपनयस्यानुपलक्षणहेतुत्वेनाभिमतत्वादयुक्तमाशङ्क्या-
ज्ञानाशयोक्तित्वेन व्याचष्टे * परस्त्विति * प्रकृतो हुतावयवा-
दर्शने ऽपि हुतसम्बन्धिशेषहुतसोमसमुदायस्यानपनीतत्वाद्द्विदेवत्य
स्यावयव प्रकृताविन्द्रवद् सतूपलक्ष्यत इति वैषम्योक्त्यर्थमुत्त्य-
तइति भाष्यमर्केदशहोमेन समुदाये नष्टे देवतान्वयनाशादयुक्तमा-
शङ्क्य देवतोद्देश्यपूर्वद्रव्यत्यागरूपसङ्कल्पकाले विद्यमानस्य समुदा
यस्य देवतान्वयानौपचारिकस्तदवयवे देवताव्यपदेश प्रकृता-
न्तत्यवमर्थत्वेन व्याचष्टे * सङ्कल्पेनेति * देवतान्वयिनि समुदा-
ये नष्टे ऽप्यवयवस्यौपचारिकदेवताव्यपदेशाभ्युपगमे द्विदेवत्यसमु-
दायनाशे ऽप्युपचारादवयवे देवताव्यपदेशाविरोध इति साम्यशा
ङ्कार्थं नन्वितिभाष्यं व्याचष्टे * इतर इति * द्विदेवत्यसमुदाया
वयवस्याप्रयणसमुदायावयवसहितस्यान्यदेवत्यत्वेनाग्रयणावयवस-
मुदायस्य पूर्वदेवतोपेतत्वात्पूर्वदेवतानुपलक्षणमित्येव साम्यनि-

रासार्थं नेतीति भाष्यं प्रकृताद्देवतापनयो ऽत्र त्वपनय इत्येवं वै-
लक्षण्योक्त्यर्थत्वेन व्याचष्टे * सिद्धान्तेति * पीत इति भूतनि-
ष्ठया नष्टस्यापि समुदायस्य देवतान्वयेन मुख्यवृत्त्याभिधानसम्भवे-
नौपचारिकावयवाभिधानयोगात्प्रकृतावपि भूतपूर्वगत्याभिधानावग-
तेरिह च पूर्वेन्द्रवाय्वादिदेवतापीतस्य समुदायस्यावयवेनान्यदेव-
त्यसमुदायारम्भे ऽपि भूतपूर्वगत्या पूर्वसमुदायावयवत्वव्यपदे-
शोपपत्तेर्भूतपूर्वगत्या पूर्वदेवतोपलक्षणं भविष्यतीत्याहेति भाष्ये-
णाशङ्क्य प्रतिपाद्यस्य सादृगुण्यायाद्देवतयोपलक्षणीयत्वादेव यथप्र-
तिपाद्यत्वेन दृष्टार्थत्वायोगाद्देवताव्यपदेशार्हत्वावगतः प्रकृतौ
भूतपूर्वगत्यापेतदेवतान्वयस्यानुपलक्षणादिह भूतपूर्वगत्योपलक्षणं
युक्तमिति परिहारार्थमुच्यत इति भाष्यं व्याचष्टे * न चेति * एक-
देशाश्रितानां चावयवानामेव समुदायव्यपदेशानोदनात्प्रत्येकमपि
मुख्यवृत्त्यैव देवतान्वयव्यपदेशोपपत्तेः प्रकृतौ समुदायनाशे ऽपि वि-
द्यमानस्यावयवस्यापि साक्षाद्देवतान्वयसमुदायेनापेतदेवतात्वस्य भू-
तपूर्वगत्योपलक्षणशङ्कायोगादिह च विद्यमानस्यावयवस्य देवता-
न्तरान्वयेन पूर्वदेवतापनयस्य सिद्धान्तसूत्रेणैव स्फुटमुक्तत्वात्पूर्व-
देवतोपलक्षणं नाशङ्कनीयमित्यतिवयोक्त्यर्थमपि चेति भाष्यं व्या-
चष्टे * इह त्विति * तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे
* तस्मादिति *

पात्नीवतशेषभक्षे त्वष्टुरनुपलक्षणीयताधिकरणम् ॥ १४ ॥

## त्वष्टारं तूपलक्षयेत्पानात् ॥ ३४ ॥

मन्त्रस्थसाहित्यवाचिचक्षुःश्रुतिसामर्थ्यरूपाल्लिङ्गात्त्वष्टुरपि दे-
वतात्वेन पात्नीवतयागाङ्गत्वमाशङ्क्य निरासात्पादलक्षणं सङ्गति-
सन्देहं च स्पष्टत्वादनुक्त्वा ऽनन्तरचिन्तितपात्नीवतविषयत्वेनानन्त-
रसङ्गतिं सूचयत्पत्नीवत्ताया विशेष्यं विना ऽपर्यवसानान्मन्त्रवर्णा-
वगतविशेष्यत्वस्याप्रसक्तिश्चोकदेवताविशेष्यत्वाद्देवतात्वेन पात्नी-
वतचोदनागृहीतस्य देवतात्वस्मारणार्थं पात्नीवतनिर्देशो त्वष्टृसाहित्य-
निर्देशात्त्वष्टृसहितस्याग्नेर्देवतात्वमिति पूर्वपक्षतात्पर्यमाह * तस्मि-
न्नेवेति *

## अतुल्यत्वात्तु नैवं स्यात् ॥ ३५ ॥

नैवमिति सिद्धान्तसूत्रावयवं व्याचष्टे * नैवेति * हेतुप्रश्न-

पूर्वमतुल्यत्वं व्याचष्टे * विधौ हीति * मन्त्रलभ्याग्निनिरपेक्षप-
त्नीवत्त्वापर्यवसानात्केवलोक्त्या त्वष्टृमात्रनिरासः पत्नीवत्त्वेनैकस्य
विशेष्यस्य नित्यमपेक्षणान्नित्यसापेक्षत्वे च समासवत्तद्धितस्याप्यवि-
धातान्मन्त्रगतसामानाधिकरण्यनिर्देशात् श्रीघ्रावगतविशेष्यत्वा-
ग्निसापेक्षत्वाविरोधे ऽपि तन्मात्रेणापर्यवसानाद्व्यधिकरणे निर्दि-
ष्टत्वसापेक्षत्वे तद्धितानुत्पत्तिरुक्ता यद्यपि मन्त्रवर्णात्त्वष्टा देवतात्वे-
न प्रतीयते तथापि तद्धितेन बाध्यत इति मान्त्रवर्णिकस्यापीत्यपिशब्दो
योज्यः । उत्तरार्द्धं व्याख्यातुमाह * न चेति * सिद्धान्तमुपसं-
हरति * तस्मादिति *

८०७।*

पात्नीवतशेषभक्षे त्रिंशतामनुपलक्षणाधिकरणम् ॥ १५ ॥

## त्रिंशच्च परार्द्धत्वात् ॥ ३६ ॥

विशेष्यापेक्षासामर्थ्यरूपाल्लिङ्गादग्नियत्त्रयस्त्रिंशतो ऽपि
देवतानां समानाधिकरण्यानिर्देशाद्विशेषार्द्धवनात्वेन पात्नी-
वते यागाङ्गतामाशङ्क्य निरासादतिदेशत्वेन सङ्गति-
त्रयमाह * अधिकरणेति * अधिकाशङ्कोक्त्या पौनरुक्त्यं परिहर-
न्पूर्वपक्षमाह * एतावता त्विति * त्रयस्त्रिंशताग्नेश्च समुच्चयेन प-
त्नीवद्विशेष्यतया देवतात्वस्य वक्ष्यमाणत्वादतिशयार्थस्तत्पक्षस्व-
माद्यपक्षेत्युक्तेन परिशेष्यत्वेनाग्नेर्गुणभूतत्वोक्तिः । या चातुल्य-
ता त्वष्टुर्निरासहेतुत्वेनोक्ता साप्यत्राग्नेर्गुणत्वावगमात्त्रयस्त्रिंशतः प्रा-
धान्यावगमाद्विपरीतेत्याह * पूर्वत्रेति * तद्धितविरोधमाशङ्क्य
पत्नीवत्त्वस्य देवतागुणमात्रतया तद्धितेन देवतात्वोक्तेर्गुण्यपे-
क्षत्वादग्नियत्त्रयस्त्रिंशतापि देवैस्तद्धितयुक्ता चोदना न विरुध्यत-
इत्याह * पत्नीवत्त्वेति * अन्यास्यगुणान्वयमात्रे तद्धितपर्यव-
सानात्त्वष्टृवत्त्रयस्त्रिंशतो ऽप्यनपेक्षमाशङ्क्य सामानाधिकरण्यनिर्देशा-
विशेषाद्गृह्यमाणविशेषतयाग्निमात्रेणापर्यवसानमाह * अवशिष्टो
हीति * अगृह्यमाणविशेषत्वे ऽप्येकेन गुणेनाकाङ्क्षानिवृत्तेर्गुणिद्वया-
न्वयो न युक्त इत्याशङ्क्याह * न चेति * गुणिद्वयान्वये ऽपि
चोदनोक्तस्य पत्नीवत्त्वस्य गुणत्वाविरोधेन चोदितया गुणिद्व-
यानिषेधान्मन्त्रगम्यानेकापि गुणिभूता देवता युक्तेत्याशयः । अ-
ग्न्यन्वये पत्नीवान् देवतात्येकवचनान्तेन त्रयस्त्रिंशदन्वये पत्नी-
वतो ऽस्य देवता इति बहुवचनान्तेन विग्रहापत्तेः सकृच्छ्रुते च श-
ब्दे विग्रहद्वयविरोधाद् गुणिद्वयान्वयश्चोदनया निषेत्स्यत इत्याशङ्क्याह

* न च मान्त्रवर्णिक्यामिति * बहुवचनान्तेन विग्रहमात्रेण गुणिद्व-
यान्वयोपपत्तेर्विग्रहद्वयविरोधोऽपि नास्तीत्याशयः । एवमप्येकगुणा-
न्वयेन निवृत्तापेक्षस्य नित्यसापेक्षत्वाभावात् त्वष्टृपेक्षायामिव गुणा-
न्तरापेक्षायामपि सापेक्षत्वात्तद्धितो नोपपद्येतेत्याशङ्क्याह * न च
प्रमाणान्तरमिति * त्वष्टुर्मन्त्रवर्णाख्येन प्रमाणान्तरेण देवतात्वावग-
मात्तद्धितेनैव त्वष्टृसापेक्षस्य पत्नीवतो देवतात्वस्यावगम्यमानत्वात्त-
द्धितप्रकृतेः सापेक्षत्वं तद्धितस्यानुत्पत्त्यापादकं दूषणमुक्तम् । इह तु
देवतान्तरानपेक्षस्यैव पत्नीवतो देवतात्वे तद्धितेनोक्ते पत्नीवत्त्वस्य गु-
णरूपत्वेन गुण्यपेक्षत्वात्तद्धिताविरोधिना मन्त्रवर्णाख्येन प्रमाणान्त-
रेणानुग्राममापि विशेषतयैकेन गुणिनाकाङ्क्षानिवृत्त्ययोगाद् गुणिरूपाया
देवताया तद्धितप्रकृतित्वानपेक्षपत्नीवच्छब्दस्य गुणोक्तिप्रयुक्तगुणसा-
पेक्षत्वं तद्धितस्य दूषणं न भवति यदि हि तद्धितोऽन्यसापेक्षप-
त्नीवन्तं देवतात्वेन विदध्यात्तदा प्रकृतिसापेक्षत्वनिमित्तमनुत्प-
त्त्यापादकदोषं तद्धितं प्रतिपद्येतेत्यर्थः । अग्नेस्त्रयस्त्रिंशतश्च दे-
वानां गुणित्वाभ्युपगमे पत्न्यः सन्त्वथा त्रयस्त्रिंशतो देवानामग्नि-
सहितानामित्यस्मिन्नर्थे मन्त्रगतपत्नीवच्छब्दमनुसृत्य तद्धितोत्पत्तेर-
भ्युपगमनीयत्वात्तत्रापि सापेक्षत्वदोषः स्यादित्याशङ्क्याह * मन्त्रस्य
त्विति * मन्त्रस्याग्निसापेक्षमपि त्रयस्त्रिंशद्देवरूपगुणित्वं न यद्-
तामनुप्रकृतौ पत्नीशब्दस्य सापेक्षत्वाभावान्न विरोध इत्यर्थः ।
गुणस्यैकेनैव गुणिना नैराकाङ्क्ष्यात् गुणित्वं न यद्वतामनुप्रकृतौ
पत्नीशब्दस्य सापेक्षत्वाभावान्न विरोध इत्यर्थः । गुणस्यैकेनैव
गुणिना नैराकाङ्क्ष्यात् गुणद्वयसाम्यात्सापेक्षं च निरुद्धमित्याश-
ङ्क्याह * समुच्चयति * अग्निमन्त्रेण त्रयस्त्रिंशद्यानपेक्षस्याग्नेस्त्रय-
८०८।१ स्त्रिंशद्देवमन्त्राभ्यामप्यभिधानात्समुच्चयमुपपादयति * न ह्यादि-
ति * परिवेष्टृत्वलक्षणयुक्तेषु मन्त्रात्समुच्चयावगतिरित्याशङ्क्याह *
स त्विति * अग्नपत्नीवत्साम पिबति पानचोदनया त्रिंशा-
न्मन्त्रया चाग्नआयाहीत्यागमनचोदनया देवतारूपतया सिद्धम-
ग्निमभित्रयस्त्रिंशतो देवानां देवतात्वमाहेत्यर्थः । ततोऽग्निस्त्रय-
स्त्रिंशद्यपत्नीवत्पीतस्येत्यमूह कार्य इति पूर्वपक्षमुपसंहरति *
तस्मादिति * कथं परिवेष्टृत्वेन देवतात्वसिद्धिरित्याशङ्क्याग्नीत्क-
र्तृकाध्वर्युचोदिताग्नीध्रमन्त्राभ्यामस्तत्वलुप्तान् अपि स्वास्यारभते परिवेष्टृ-
त्वायोगमसूचनाद्व्यवस्थानेन च अर्पणानर्हतया गुणभूतत्वायोगमूच-
नाद्गतश्च देवतात्वातिरिक्तस्याप्ययोगादेवतात्वसिद्धावत्र परि-
हारसूचनार्थं वस्तुतः परिवेष्टृत्वेन देवतात्वं मन्त्रव्याख्यया दर्शयतीत्याह

*तदिति*मन्त्रव्याख्यार्थमिमं हीति भाष्यं व्याचष्टे*याज्यामिति* मन्त्रस्य विश्वामित्रार्थत्वादग्नीधोध्यर्तृत्वायोगमाशङ्क्य याज्यापाठयितृत्वेनाध्येतृत्वोपपादिता । छन्दसीत्यनुवर्त्तमाने व्यवहिताश्चेति सूत्राद्व्यवहिता न्वयोपपत्तिः छन्दसीत्यनेनोक्ता । आयाहीत्यादावात्तान्वयायेत्यध्याहारस्तत्रश्चेत्यनेनोक्त ।इदमिति भाष्यावयवस्यानुष्वपद्व्याख्यार्थत्वोक्तौ पदपाठवत्पूर्वस्वधाशब्दाव्याख्यार्थो ऽत्रशब्द सोमयागविनियोगानुसारात्सोमविषयत्वेन व्याख्यात आवहेत्याख्यातस्योत्तराख्यातान्वयायाहुयेति पदस्य भाष्ये व्याहृतस्य ततो ऽनन्तरमित्यर्थे प्रतीत्यावगतिस्तत्रश्चेत्यनेनोक्ता तर्पयत्यस्य मादयत्यर्थव्याख्यार्थत्वोक्तौ * मादयत्युक्तम * ऋत्विग्प्रत्ययेनार्थतयात्यर्थनिश्चय. । अत्र हीति भाष्यं व्याख्यातुमाह * तेनेति * नन्वित्याशङ्कानिरासार्थं सत्यमिति न च चोदनयति वार्त्तिकेन किमत इत्याशङ्कानिरासार्थं न च मान्त्रवर्णिका इति भाष्यं न च मान्त्रवर्णिक्यामित्यनेनागतावेक्षणेन व्याख्यातत्वादव्याख्याय त्रिधैव स्यादित्यभिधानाभिस्तुत्यर्थं सङ्कीर्त्यमानत्वादेवमुपलक्षणनिरासार्थं नैवमिति पूर्वसूत्रावयवानुषङ्गेण सूत्रव्याख्यार्थमेव प्राप्तइत्यादिसङ्कीर्त्यते भाष्यमाक्षिप्य व्याचष्ट * एवमिति * कुत इति हेतुप्रश्नभाष्यव्याख्यार्थं कुत इत्युक्ता सहीत्युत्तरभाष्यं पूर्वार्द्धेन व्याख्यायोत्तरार्द्धे ऽनेन चेत्याशङ्कानिरासार्थमुच्यतइति भाष्यं व्याख्यातम् । पूर्वार्द्धं व्याचष्ट * पायनीतेति * उत्तरार्द्धं व्याचष्टे * न चेति * देवतात्वेन चोदितस्याग्नेर्दातृत्वक्षितैश्वर्यप्रकाशनरूपस्तुत्यर्थत्वेन [illegible]शङ्कीर्त्तनादित्यर्थे । कथमिति प्रश्नभाष्यं व्याचष्टे * कथमिति * न हीत्यादिप्रत्यायवतीत्यन्त भाष्यं व्याचष्ट * अप्रसिद्धेति * यस्यान्यतोऽप्रासिद्धैश्वर्यस्याग्नेर्दातृत्व कीर्त्यते तस्यैश्वर्यार्थं तद्दातृत्वकीर्त्तित प्रतीयते न हि तस्य दातृत्वकीर्त्तनस्य मुख्यो दातृत्वरूपो ऽर्थ सम्भवनाद्द इति न शब्दाध्याहारेण वाच्यम् । आकाङ्क्षामुपपादयति * यदि हीति * ८०९॥ देवतात्वेन चोदितस्याग्नेरकरणात्प्रकथनात्कीर्त्तनाख्य प्रकथनार्थं करोति । मादयतेस्तर्पणमात्रवाचित्वाद्दातृत्वाख्यविलम्भयितृत्व च कीर्त्यतइति न त्विति भाष्येणाशङ्क्य लक्षणया विलम्भनकीर्त्तनात्स्यर्थं उच्यतइत्यादिभाष्यं व्याचष्ट * मादयस्वेत्यपि चेति * यथेष्टविनियोज्यत्वरूपपरस्वत्वापादनाभावेन दानस्यापि मुख्यस्याभावाद्देवतोद्देशेन द्रव्यत्यागमात्र दानत्वेन विवक्षितमिति भाष्ये त्यागोक्त्या सूचितम् त्यक्तत्वकीर्त्तने ऽप्यैश्वर्यं कीर्त्तनार्थत्व कथमिति न त्विति भाष्येणाशङ्क्य लक्षणयैश्वर्यकीर्त्तितोक्त्यर्थं तदुच्यतइत्यादिभाष्यं व्या-

कर्तृत्वावगमात् एव समाख्याहेतुको विनियोगः सेत्स्यतीति मतमि-
त्यस्मिन् दूषयितुमुपन्यस्यति * तत्रेति * यद्यपि तैरेव धर्मसम्ब-
न्धे सारूप्यानुपस्थापनस्य सामर्थ्यं प्रसिद्धं तथापि तावद्रूढि सारू-
प्यहेतुकस्योपस्थापनस्य नास्त्येव स्वोपदर्शिके क्रियाकर्तृसम्बन्धे सा-
रूप्यहेतुकस्योपस्थापनस्य सामर्थ्यं दूरात्सारितमित्येव दूषयति *
८३५। न निर्वति * उपस्थापनस्य नित्यमुपस्थापकापेक्षत्वादुपस्थापकसारू-
प्यसापेक्षत्वे ऽपि सामर्थ्यशब्देन सह समासाविघात । कथं रथन्त-
रशब्दस्य यौगिकत्वे सत्यरथन्तरे रथन्तरं रथन्तरशब्दस्य वस्त्वर्थक-
ल्पनया शब्दोक्तान्सादृश्यात्प्रवृत्त सादृश्यस्य च धर्मसामान्यल-
क्षणत्वात् रथन्तरधर्मानिर्दशकत्वं स्यात् रूढित्वात्तु शब्दसादृश्येन
रथन्तरशब्दोपस्थापनद्वारा रथन्तरोपस्थापने ऽपि शब्दसादृश्यस्य प्र-
त्यक्षस्य गम्यत्वेन शब्दत्वात्तद्वारेण रथन्तरोपस्थापने शब्दसाम्यापा-
दनान्निदर्शनं युक्तेति वार्त्तिककृतान्तरं रूढिसादृश्यहेतुकस्योप-
स्थापनस्यानिदर्शिकधर्मान्वयासमर्थतोपपादिता । उपदर्श तु वस्त्वर्थ-
लक्षणेन शब्दोक्तस्यापि सारूप्यस्य हेतुत्वाभावात् सादृश्यस्य
सारूप्याभावात्सादृश्यस्य सारूप्यसम्बन्ध विनानर्थक्याभावेन
सम्बन्धाभिमुख्यरूपेणानुपस्थापकत्वात् स्वरूपमात्रेण चोपस्थापने
ऽपि गोगवयवत्सम्बन्धाप्रतीतेरशब्देन सारूप्येणोपस्थापने शब्द-
स्याव्यवहारात् वैदिके च शब्दव्यतिरिक्तप्रमाणाभावात् रूढिसारूप्य-
स्य क्रियाकर्तृसम्बन्धस्य शक्तेर्दूरोत्सारितता किमुतेत्यनेनोक्तार्थाद्वा
सम्बन्धमात्रे ऽपि सारूप्यहेतुकत्वोक्तस्योपस्थापनस्य शक्तिर्नास्ति त-
द्विशेषे तु क्रियाकर्तृसम्बन्धे दूरोत्सारितेत्यर्थः । भाष्यकृतो ऽपि रू-
ढितानभिमतेति सूचयितुमाह * याचकादीनि * परपक्षे दोषमु-
क्त्वा स्वपक्षे दोषं परिहर्तुं निर्दोषत्वं प्रतिजानीते * तस्मादिति *
अनुमानपूर्वं पारहृदति * यस्त्विति * तस्य समाख्याहेतुकात् वि-
नियोगात्प्रागध्वर्युणाध्वर्यवानुष्ठानादध्वर्योस्तत्पदयोः सम्बन्धे प्र-
त्यक्षप्रमाणं नास्ति तथाप्यध्वर्युणा ऽयमेव कार्यमित्येवं रूपं युक्त्या ऽन्य-
प्रमाणं समाख्यया क्रमादपारम्पर्येणाङ्गाङ्गिसम्बन्धबोधकत्वाद्विनि-
योगात् प्रागनुमाय सम्बन्धं प्रमाणं भविष्यतीत्यर्थः । सम्बन्धात्मा
न्यौगिक्या समाख्यया प्रवृत्तिरयुक्तेति यदुक्तं तत्परिहर्तुमाह *
वेद इति * अनादित्वोपलक्षणाया वेदोक्तिरनादिसमाख्याप्रमाण-
कस्य सम्बन्धस्यानादित्वादिदानीं तत्र समाख्यातृप्रयोगात् प्रागेव पू-
र्वेष्वनुष्ठातृषु निष्पन्नेस्तस्मिन् प्रतीते सतीदानीन्तनेषु प्रयोक्तृषु स-
माख्या प्रवृत्तेत्यर्थः । समाख्यात प्रागङ्गाङ्गिसम्बन्धप्रतीतौ समा-

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठशालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृश्वो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्यमाणा ग्रन्थाः–

| | | मुद्रिताः स्तबकाः |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत–न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्तः) | १ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्र भाष्यम्–बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमल्लिकार्जुनमिश्रु कृत व्याख्यानम् । सम्पूर्णः । | ( वेदान्तः ) | ६ |

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णम्। (जैनदर्शनम्) १

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपणा-परम्–श्रीभाष्यकृतां परमगुरुभिः श्री यामुनमुनिभिर्विरचितम्। सम्पूर्णः (वेदान्तः) ६

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) २

(१२) [illegible] (न्याय) ५

(१३) विधिरसायनम् श्रीअप्पय्यदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (वेदान्तः) १२

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। (वेदान्त) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशाध्यायार्थसंग्रहः) श्रीमद्वेदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैत साम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि मीमांसादर्शनम्) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम्। (मीमांसा) २

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम्। २

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् (वेदान्त) १

पत्रादिप्रेषणस्थानम् } हरिदासगुप्त,
चौखम्बा संस्कृतपुस्तकालय
बनारस सिटी।



No. 73 ] [ *Price Rupees One*

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# न्यायसुधा ।

तन्त्रवार्तिक टीका भट्टसोमेश्वरविरचिता ।

## NYÂYASUDHÂ,

A COMMENTARY ON TANTRAVÂRTIKA.

BY

PANDIT SOMESHWARA BHATTA,

EDITED BY

PANDIT MUKUNDA SHÂSTRI,

*Professor Deccan College, Poona.*

FASCICULUS XIII.


*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES.

AGENT—OTTO HARRASSOWITZ, LEIPZIG

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA-VILASA PRESS.

BENARES.

1904.

*Registered According to Act XXV. of 1867.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोदितम् ॥ २ ॥

स्तबकः—७३

स्याप्रमाणं न स्यादित्याशङ्क्यानुष्ठातृषु निष्पन्नस्यापि सम्बन्धस्या-
माभमीमांसकमूलप्रमाणं विना याज्ञिकानुष्ठानमात्राद्विश्वसन्ति प्र-
तिपन्नं समाख्याख्यमूलप्रमाणदर्शनेनैव वयं मीमांसकाः सम्बन्धं
प्रतिपद्यामह इत्याह * वयं त्विति * सम्बन्धप्रतिपत्तिं विना सम्ब- ८३५॥१
न्धनिमित्ताया समाख्याया दर्शनायोगात्समाख्यादर्शनेन सम्बन्धप्र-
तिपत्तौ अन्योन्याश्रयत्वं स्यादित्याशङ्क्य क्लृप्तावयवार्थप्रत्यभिज्ञा-
नेनावयवार्थाभावविनिश्चयं च विना समुदायकल्पनायोगात्स-
म्बन्धज्ञानपूर्वं प्रयोक्तृस्था समाख्या ज्ञायते पश्चात्सम्ब-
न्धो ज्ञायत इत्याह * नन्विति * कथं तर्हि सम्बन्धस्य
प्रथमताक्त्याशङ्क्य वस्तुस्थित्याह * वस्तुतस्त्विति * सम्ब-
न्धे ऽपि सम्बन्धस्याज्ञाने तत्प्रतिपादिकाया समाख्याया प्रवृत्ति-
रयुक्तेत्याशङ्क्य सम्बन्धस्याप्रतीतावप्यसत्त्वनिश्चयाभावमात्रेण क्लृ-
प्तावयवार्थप्रत्यभिज्ञानं समुदायशक्तिकल्पनायोगात् । प्रयोक्तृस्था-
या समाख्याया ज्ञातारं प्रति ज्ञेयत्वेन प्रवृत्तिर्युक्तेत्याह * स च-
ति * अन्यप्रयुक्तसमाख्यादर्शनाच्छ्रोतुः सम्बन्धप्रतिपत्तिसम्भवे ऽपि
अनवगते सम्बन्धे तत्प्रतिपादिकया समाख्यया वक्तुः प्रयोगादप्र-
युक्तायाश्च श्रोतुर्दर्शनायोगात् न सम्बन्धप्रतिपत्तिरित्याशङ्कानिरा-
सपूर्वं यौगिकया समाख्यया सम्बन्धमात्रावगमे ऽपि तद्विशे-
षाङ्गाङ्गिसम्बन्धावगतिः कथमित्याशङ्क्य निरस्यति * यदि हीति *
प्राक्सम्बन्धावगमे ऽपि नित्यत्वात्समाख्याया पूर्वं वृद्धप्रयोगदर्शना-
त्सर्वदा नित्यप्रयोगापरत्वाद्युक्तायाः सम्बन्धनिमित्ताया समाख्या-
यास्तं विना कथं नित्यप्रवृत्तिरित्याशङ्क्य सम्बन्धस्य प्रवाहनित्यताक्ता
न्समाख्यावगतस्य सम्बन्धसामान्यस्य विशेषं विनानुपपत्तेर्वि-
धान्तरानुक्तश्चाध्वर्योश्चाध्वर्युं वृणीतानि विधिना वरणाध्वर्युमुपा-
ददीतेत्यवविधानात्सामान्यतो ऽङ्गत्वादन्वाधानादेश्च क्रतूपकारत्वेन
समुदितत्वात्सामान्यतो ऽङ्गत्वं ऽवगतेर्विध्यनुगृहीतया समाख्यया-
ङ्गाङ्गित्वलक्षणं सम्बन्धविशेषो ज्ञायत इति द्वितीयाशङ्कानिरासाय
अनेन चैव पदे ऽपीति भाष्यस्याकृतकमध्वर्युत्वाद्याधानाद्यवयवयो
प्रकृतिप्रत्ययार्थयोः सामान्यतः सम्बन्धप्रतिपादकमध्वर्युशब्दमनु-
पलभ्य निर्विषयसामान्यायोगात् तस्मिन्नङ्गाङ्गिसम्बन्धबोधस्य वि-
नियोगविषयभूत ऽङ्गाङ्गित्वलक्षणे सम्बन्धविशेषे प्रत्ययो भवती-
ति शङ्काद्वयनिरासपरत्वेन व्याख्या सूचिता वैदिकस्य क्रियाकर्त्रा-
दिसम्बन्धस्य प्रमाणान्तरादनवगते सम्बन्धनिमित्तसमाख्याद-

( १ ) अत्र वे ऽपीति १ पुस्त० ।

ऽपेक्षाविशेषेण क्रयान्वयितया वाक्येन क्रयान्वयपर्यन्तत्वे ऽपि स-
म्बन्धयेन समीहितप्रयोजनानवाप्तेः प्रयोजनविषये ऽपेक्षान्तरे सति
ज्योतिष्टोमापूर्वसम्बन्धवचनं क्रयस्य सम्बन्धिन सतो ऽरुणैकहायन्यस्य
ज्योतिष्टोमान्वयितया प्रकरणेन प्रमेयत्वात् विषयतानात्वेनाविरु
द्धा सर्वेषां विनियोजकत्वेत्यर्थः । कथं कारकश्रुत्यारुण्यस्य क्रियान्व-
यप्रमितिरित्याशङ्क्य पदश्रुतकारकान्वयद्वारा क्रियान्वयोपप त्ति-
सूचनार्थां कारकोक्ति श्रुत्यादिर्कारकेपति प्रमीतः क्रियाया सह
कारकद्वारा सम्बन्धो यस्यारुण्यस्येति विग्रहो विशेषस्य सामा-
न्य प्रत्याश्रयत्वेन विषयत्वाद्विशेषणविशेष्यान्वयमात्रं वाक्यस्यावस्तुनो व्यापारो नाङ्गाङ्गिभावस्य विनियोगो प्रौढ्याभ्युपेत्य तत्र वि
नियोग वाक्यव्यापार विषयताकानि सूचनार्थां विषयतोक्तिः । क्रय-
स्येत्यान्वयव्यतिरेकजनिता षष्ठी । प्रकरणसमर्पितज्योतिष्टोमापूर्व-
साधनार्थत्वेन श्रुतिव्यापारपर्यवसानादूर्ध्वमपेक्षितशेषित्वरूपसम
र्पणमात्रे प्रकरणव्यापारसूचनार्थं ज्योतिष्टोमविशिष्टस्य क्रयस्य शे
षित्वाद्विशेषणीभूतस्य ज्योतिष्टोमस्यापि शेषितामभिप्रेत्य ज्योति-
ष्टोमार्थत्वोक्तिरिति प्रकरणेन ज्योतिष्टोमिकस्य क्रयस्य शेष इति पू-
र्वोक्तनाविरोधः ।

अर्थापत्त्या च युज्यन्ते सम्बन्धग्रन्थि प्रमाणकम् ।

इतिवद्विनियोगे व्याप्रियमाणया श्रुत्या ऽपेक्षितस्य शेषित्वस्य वाक्ये-
नापूर्वसाधनत्वस्य,च प्रकरणेन समर्पणाद्वाक्यप्रकरणयोर्विनियोजक-
श्रुतिसहायत्वं विवक्षित्वा सर्वेषां विनियोजकत्वोक्तिः । प्रकरणेनापूर्व-
साधनत्वसमर्पणात्प्राक्श्रुतिव्यापारपर्यवसानादेवारुण्यस्य क्रिया-
र्थत्वं श्रुत्यैवेत्यनेनोक्तम् । एकविषयापहारलक्षणस्तु समवायः ऽरुणा-
वाक्यनाशङ्क्य एवेति दर्शयितुमाह *न चेति* वाक्यादिप्रमाणकविष-
यान्वयग्रहणात् । श्रुत्यादिप्रमाणकत्वेऽप्यन्वयबाधकप्रसक्तौ सत्यां
श्रुत्यादिना स्वप्रमेयत्वेऽप्यन्वयाबाधार्थम एव वाक्यादिप्रमेयाच्छेपिण-
श्चो ऽपहितेन तद्रूपाबाधप्रसक्तादर्शनेन त्वपहारान्यार्थानेकविषया-
पहारित्वलक्षण समवाय सम्भवतीत्याशय । ज्ञानस्य बाधस्याऽनि-
यार्यत्वात् प्रसक्तो दर्शयितव्यबाधार्थम एतदेव विवृणोति * न ही-
ति * कथ तर्हि प्रमाणसमवाय सम्भवतीत्यपेक्षायां स चैकार्थे
प्रमाणानामित्येतद्व्याख्यायोत्तरमाह *यत्र त्विति* एकस्याः एवाद्या ८३७।२
एवान्यूनाधिकाया ऐन्द्र्या लिङ्गेन गार्हपत्यादय श्रुत्यन्द्रार्थत्वबाधाना
दुहत्या चेन्द्रापहृत्य गार्हपत्यार्थत्वबाधानात् श्रुतिविषयो लिङ्ग स प-
रस्परेणापहार्ये समान विषयो ययोस्ते तथोक्त तयोर्भावस्तत्त्व तल्लक्ष-

णमस्येति विग्रहः । विशेषणाच्चावगम्यत इत्येतद्व्याचष्टे * तथेति * एकस्मिन्नेव गार्हपत्ये शर्विणि तुल्योपस्थापनजन्योपकारनिबन्धन-त्वाद्यान्यूनानधिकेन लिङ्गेनैन्द्र्या गार्हपत्यमपहृत्यामुष्यास्तदुपकार साधनत्वेन शेषत्वप्रतीतेः श्रुत्या चाप्रतीतो ऽपहृत्यैन्द्र्या शेषत्वप्रतीते एकशेषिविषयापहारित्वाच्छेषयोः समवाय इत्याशयः । तुल्य उपकार-शेषान्वये निबन्धनमस्येत्याद्ये पूर्वविशेषणे द्वितीये त्वेकेन शेषणोप कारः साधितो ऽस्येति विग्रहः । एकाकार्यस्य विरोधग्रहणाकार्यत्व हेतुतामुपपादयितुमाह *स चेति* विरोधं विना नापहारः सम्भव तीत्याशयः । प्रमाणविषये शेषे शेषविषये च शेषियकत्वविशेष णस्यान्यूनानतिरिक्तत्वविशेषणस्य च यथाक्रमं फलानि दर्शयितु माह * यत्र पुनरिति * शेषैकत्वविशेषणस्य समिदाद्याज्यादिषु शेषभे-दे प्रमाणासमवाये निवृत्तफलत्वं ऽभिहिते कथं तद्वाक्यादिशेषि-भेदे तथा श्रुतिलिङ्गविरोधवार्त्तिके विरोधाभावात् प्रमाणसमवायो दृश्यत इत्याद्यङ्ग भिन्नोपकारसाधनशेषभेदो ऽत्र विवक्षित इति सू-चनार्थो स्पष्टोक्तिरत्यन्यूनानतिरिक्तविशेषणफलं यत्र वा तस्येत्यनेनाक शेष्यकार्यविशेषस्याप्रयादिशेषिभेदे समवायनिर्णीतफलत्वं तथत्यने नोक्तम् । तुल्योपकारित्वानिबन्धनविशेषणफलोक्त्यर्थं यत्र शेषैक्य ऽपि शेषिणामाधिक्यं यथा दर्शपूर्णमासयागाङ्गानामेकस्मिन्नाग्ने-याद्ये शेषिण्युपकार्यत्वेन शेषित्वात्प्रत्यङ्गं चोपकारभेदात्सान्निधा-गजन्ययागान्तरोपकारोपकार्यत्वेनाग्नेयस्य सन्निधानशेषित्वात्तनूनपा-याजन्ययागान्तरोपकारोपकार्यत्वेन तनूनपाद्यागशेषत्वेन समवान्तरो पकारनिबन्धनमाधिक्यं तच्छ्रवणात् प्राधान्यविषयान्यायात्समवाय इत्युक्तं यत्र शेषभेदो यत्र वा तस्यैव शेषस्य क्रियाधिक्यं तत्र प्रमाणानां शेषाधिक्यविषयत्वादन्यसमवायस्तथा यत्रावयवानां प्रधाना-ङ्गाधिक्येऽन्यायसमवाय इति प्रसक्त तत्रैतस्यान्वयसूचनार्थो ऽपिशब्दः. एवं सत्यपि विरोधविषयत्वाद् बलाबलचिन्तायाः सा-क्षाद्विरोधग्रहणमेव कस्मान्न कृतमित्याशङ्क्य विरोधे सत्यपि समवा-याभावं प्रत्यक्षेण श्रुत्यादिना विनियोग इते ऽपि श्रुत्यनुमानमूलभू तानामाकाङ्क्षानिवृत्त्याभावे श्रुत्यनुमानद्वारा लिङ्गादिजन्यविनियोग-प्रतिबन्धायोगात् सर्वेषां तुल्यत्वापत्तेर्विरोधं विना बाध्यबाधकत्वायो गात् विरोधाभावद्वारा समवायस्यैव बाधहेतुत्वे ऽपि समवाय-स्यैव बलाबलचिन्ताविषयत्वात्समवायग्रहणमेव कार्यमिति परिहारं सूचयितुमाह * इमीति * समवाय सतीतिकरणार्थे समवायाभाव स्य महिषयाद्विरोधासम्भव ऽप्युक्त इत्यविरोधायोगाद् सर्वेषां तु-

इयत्यापत्तेर्बलवद्बलत्वायोगादित्याशयः । समिदादीनामङ्गानाम-पान्तरोपकारभेदेऽपि परमोपकाराभेदेन भिन्नोपकारसाधनत्वभेदा-भावात् प्रमाणसमवाय्येकपरमोपकार्यत्वेन चैकस्य शेषिणोऽभिन्नाप-कारोपकार्यत्वनिबन्धनाधिक्याभावाच्छ्रुत्यसमवाये सत्यपि विरोधा-भावात् । समवायस्य विरोधव्यभिचारावगतेः कथं समवायग्रहणा-द्विरोधशक्तिसिद्धिरित्याशङ्क्याह *यस्त्विति* फलं भावयेदित्येतदर्थ-मित्यपर्यायेण यौगपद्येन ज्ञातं परमोपकारं विधानात् श्रुत्यादीनां च प्रत्येकविनियोजकतया यौगपद्येनाकाङ्क्षाविनियोजकत्वायोगात् प्रयोगवाक्यस्यैव विनियोजकत्वावगतेस्तस्य च एकत्वेन शेषप्रमा-णानां भेदाभावात् समवायस्य च भेदाधिष्ठानत्वात् असमवाय । शेषाभेदस्य च भिन्नोपकारसाधनत्वेनेह विवक्षितत्वात् परमोपका-रापेक्षया च शेषाणां भिन्नोपकारसाधनत्वाभावात् असमवाय इत्यु-क्तं प्रात्यात्मिकविध्यालोचनयाङ्गानां प्रत्येकमुपकारसाधनत्वावग-मात्सहत्यैकोपकारसाधनत्वायोगमाशङ्क्य समिधादीन् भावयेत तनू-नपादादीन भावयेदिति प्रात्यात्मिकविधिभिर्व्यापारभेदावगतेः प्रत्ये-कं बुद्ध्या व्याप्रियमाणानां श्रुत्यादीनाम् एकस्मिन् छघुजयावये स्वा-म्युपातानेकव्यापारसाध्ये सहत्य साधनत्ववदङ्गानां प्रात्यात्मिक-भिन्नव्यापारधारा सहत्यैकोपकारस्य साधनत्वोपपत्तेः शेषत्वस्यैव उपपत्तिसूचनार्थो व्यापारभेदोक्तिः । एवमप्येकस्यैव प्रधानस्य हविर्मन्त्राद्येः शेषस्यैकस्मिन्नेव पुरोडाशप्रथनादौ शेषिणि श्रुत्या लिङ्गेन च विनियोगात् प्रमाणसमवायस्य विरोधव्यभिचारावगतेः समवायग्रहणाद्विरोधासिद्धिरित्याशङ्क्य लिङ्गस्यैव तत्र प्रमाणभूत-त्वात्श्रुतेरन्यासादिप्रयोजनान्तरार्थत्वात् तत्र प्रमाणसमवाय इ-त्याह * तत्रेति * न्यूनत्वशङ्कापरिहारम उपसंहरति*तस्मादिति * लोकशो बलाबलसम्प्रधारणस्य चिकीर्षितस्यौचित्योक्त्यर्थमनेका-र्थेति भाष्यमनेकेषु अर्थेषु वाच्यवृत्तित्वेनादेकार्थवृत्तित्वं च द्वयोर्द्वयो- सम्प्रधारणायोगात् अयुक्तमाशङ्क्यैकार्थ-वर्तित्वोक्तिः । एककालविषया सम्प्रधारणा चैके-कस्याभिप्रेतेत्येवं परिहर्तुमाह * तत्रेति * सूत्रे कृत्स्नशो बलाबलो-क्तेर्भाष्ये लोकशः सम्प्रधारणस्यानौचित्यशङ्कानिरासार्थत्वं षण्णा-मप्येकस्मिन्नेव काले बलाबलकथनीयत्वोक्त्या सूचितम । एकैकस-म्प्रधारणस्याभिप्रेतत्वे द्वयोरितियुक्तेति आशङ्क्यैकैकस्य द्वितीयेन सहैत्येवमर्थत्वेन द्वयोरुक्तिं व्याख्यातुमाह * यस्त्विति * एकैकस्मिन् श्रुत्यादिरूपेऽर्थे बलाबलचिन्तनं इत्येवमेकार्थवर्ति-

त्वाद्वाच इत्येतावदन्यथा व्याचष्टे * एकार्थेति * एतदेवोपपादयति
* तानि हीति * बलाबलं प्रति श्रुत्यादीनां प्राधान्यात् प्रतिप्रधा-
नं बलाबलोक्तिरावर्त्तनीयेत्याशयः । एकमप्येकैकस्य पञ्चभिः सह
सम्प्रधारणीयत्वात् द्वयोक्तिरयुक्तेत्याशङ्क्याह * तत्रेति * श्रुत्या-
दिर्बाधितेन लिङ्गादिना बाध्यस्य वाक्यादेः वाक्यादिबाधकस्य लि-
ङ्गादेर्बाधकेन श्रुत्यादिनेत्यर्थः । एतदेव विवृणोति * यानि हीति *
तत्रेतिभाष्यं श्रुतिलिङ्गबलाबलसम्प्रधारणस्य प्राधान्योक्त्यर्थत्वेन
व्याचष्टे * तत्रेति * किंपुनरित्युदाहरणप्रश्नभाष्यम् अनेकोदाहरण-
प्रश्नभाष्यम् अनेकोदाहरणसद्भावात् अयुक्तमाशङ्क्य न किञ्चिदुदाहर-
णं सम्भवतीत्येवमाशयत्वेन व्याचष्टे * किमिति * केवलस्य पद-
स्य श्रवणसामर्थ्याभ्यां विनियोगादर्शनाच्छ्रुतिलिङ्गयोः स्वकीयस्य
विनियोगसामर्थ्यस्य वाक्यीयविनियोगसामर्थ्याद्विवेको न लक्ष्यत
इत्यर्थः ऐन्द्र्येत्युत्तरभाष्यं विवेकहेत्वनभिधानादयुक्तमाशङ्क्याह
८३८।१ * वक्ष्यमाणेति * अत्रेति सन्देहभाष्यमाहाक्षिलिङ्गमिति भाष्ये
लिङ्गबलीयस्त्वोक्तेरैन्द्र्यैवेत्यपि नियमस्य उक्तत्वादिदं तु लिङ्गब-
लीय इत्यस्मिन्नुज्जीविष्यमाणत्वादत्र नहि विरोध इति भाष्यं चाप-
वादयिष्यमाणत्वादविरोधात् क्व स्वदपीति भाष्येण समुच्चयस्यापि
वक्ष्यमाणत्वात् । चतुर्थसन्देहप्रतीतेर्न्यूनमाशङ्क्योपलक्षणार्थत्वेन व्या
ख्यातुमाह * किमिति * यदीति सन्देहहेतुभाष्यमप्युपलक्षणार्थत्वेन
व्याख्यातुमाह * यदीति * पूर्वाधिकरणे श्रुतिबलेन मन्त्रस्य यथार्थ-
त्वाभिधानात् पौनरुक्त्यमाशङ्क्याह * यदीति * का पुनरिति प्रश्न-
भाष्यं श्रुते ऐन्द्र्या गार्हपत्यमितिद्वितीयाविभक्तिलिङ्गं मन्त्रेषु व-
चनसामर्थ्यमिति प्रकरणात् प्रकरणोपक्रमभाष्ये स्वरूपस्योक्तत्वात्
अयुक्तमाशङ्क्य श्रुतिलिङ्गयोर्वाक्याद्विवेकाभावाश्रयत्वेन व्याचष्टे *
तेनैवेति * केवलपदप्रयोगाभावादिति वार्त्तिकात्तत्र मन्त्रेषु वाक्य-
त्वान्यायेन श्रुतिलिङ्गरूपेऽर्थे वाक्यत्वभ्रान्त्या पूर्वोक्तमपि स्वरूपं
पृच्छतीत्यर्थः । श्रुतिरित्युत्तरभाष्यं भ्रान्तिनिरासकविवेकानभिधा-
नादयुक्तमाशङ्क्य यत्र यत्तावच्छब्दस्येत्यादिभाष्ये वक्ष्यमाणविवेका-
भिप्रायेणोदाहरणाभावाशयस्य प्रश्नस्यैन्द्र्येतिभाष्येणोत्तरमुक्तं ते-
नैवाभिप्रायेणेदमप्युत्तरमित्याह * तत्रेति * प्रश्नशेषनिरासं वि
नोत्तरत्वायोगात् । उत्तरोक्त्या तेनैवाभिप्रायेणेति पदद्वयानुषङ्गस्ते-
नैवत्यस्य च वक्ष्यमाणविवेकविषयत्वपरामर्शित्वं सूचितम् अथेति
प्रश्नभाष्यं वाक्यस्य श्रुतिलिङ्गाभ्यां विवेकाभावाशयत्वे व्याचष्टे
* एवं पुनरिति * सहत्वेत्युत्तरभाष्याशयमाह * सिद्धान्तेति *

पदसमूहस्यैकवाक्याभावादयुक्तमाशङ्क्य द्वेधा व्याचष्टे।* यद्यपि ८३९।१
चेति * वाक्यार्थद्रमयन्ती सतीत्याद्यव्याख्यानेन गमनमात्रल-
क्षणार्थो ऽभिद्धाति द्वितीये त्वेकेन पदाभिहितैकगम्यमानेन वा-
क्यार्थेन पदसङ्घातस्य प्रयुक्तत्वात् सङ्घात पदार्थं स्वस्वपदार्थम-
भिदधति पदान वाक्यामत्यर्थः । पदार्थाभिधानानपेक्षस्य पदस-
ङ्घातस्य वाक्यार्थवाचितायाः उपसंहारस्य उपक्रमानुरोधवृत्तित्वेन
वाक्यार्थव्याख्यासिद्धान्तभङ्गापत्तः । पदार्थाभिधानद्वारतोक्ता प्र-
द्नातयविवरणार्थं यदित्यादिभाष्यं भाष्यं व्याचष्टे * तदिति *
वेदे मन्त्रव्यतिरिक्तस्य शब्दस्य लिङ्गविनियोज्यत्वाभावात् प्रकर-
णोपक्रमे मन्त्रविनियोगहेतुलिङ्गस्वरूपप्रदर्शनार्थं मन्त्रवृ वचनसा-
मर्थ्यमित्युक्तम् । कारकाविभक्तिश्रुतेरेव च विनियोगहेतुत्वात्कार-
काविभक्त्युपलक्षणार्थं द्वितीयाविभक्तेः श्रुतितोक्ता का पुनरत्र श्रुतिः।
किं लिङ्गमित्यनेन ऐन्द्र्युदाहरणे ऽत्र शब्देन श्रुतिलिङ्गयोः स्पृ-
ष्टयादिन्द्रशब्दस्य इवनाभिधानसामर्थ्यं लिङ्गमित्युक्तम् । गार्हपत्यं
प्रातिपदिकार्थत्वं च विना विभक्तिमात्रात् गार्हपत्यमाधान्यप्रती-
तेः लिङ्गविरोधाभावेन बलाबलं विनोदाहरणत्वाप्रसङ्गात् गार्हपत्य-
श्रवणश्रुतितोक्ता इह पुनः श्रुतिलिङ्गवाक्यानाम लक्षणतो विवे-
कार्थं सामर्थ्यमात्रस्य लिङ्गलक्षणत्वे ऽन्यार्थान्तरविषयत्वे लिङ्गस्य
श्रुतिवाक्याभ्यां विवेकस्यष्टविषयत्वाच्छब्दविषयलिङ्गस्य श्रुतिवा-
क्याभ्यां विवेकार्थाभिधानसामर्थ्यलक्षणं यदर्थमभिधातु सामर्थ्यं
तच्छब्दस्य लिङ्गमिति वक्तोक्तं विध्यभिधानश्रुत्या लिङ्गवाक्याभ्याम
अविवेकवद्वायां तदर्थ विनियोगश्रुतिरपि अविवेकाद्यपदार्थस्य
स्वरूपेणानियतत्वनेकार्थत्वाभिधानेन तच्छ्रवणमितिकृत्वा श्रुतिरिति
तच्छब्दाद्याहारेयो श्रुतिमात्रलक्षणमुक्त्वा श्रोतृजन्यस्य श्रवणशब्द-
वाच्यत्वाप्रसिद्धेः शब्दजन्यार्थज्ञानाख्यस्याभिधानस्य श्रवणशब्दवा-
च्यत्वायोगात् पर्यायश्रुतिवाच्यता न युक्तेत्याशङ्क्य सो ऽर्थः
श्रुत्यावगम्यतइति कृत्वा श्रुतिजन्यार्थावगमाख्यमभिधानं लक्षणया
श्रुतित्वेन व्यपदिश्यतइत्युक्त व्याख्यायार्थज्ञानस्यापि तर्हि शब्दश्र-
वणाख्यश्रुतिजन्यत्वाच्छ्रुतित्वापत्तिरित्याशङ्क्यापदार्थाभिधानानपे-
क्षाच्छब्दश्रवणाद्यो ऽर्थो गम्यते स एवानया श्रुत्या गम्यतइतिव्यप-
दिश्यते न तु पदार्थाभिधानद्वारा गम्यमानो वाक्यार्थ इत्युक्ते स-
हत्यार्थमित्यनेन तु वाक्यमात्रलक्षणस्यैवोक्तत्वादेहान्यलक्षण वाक्यं
इत्येकार्थमित्यनेनोक्तमित्येवं भाष्यं व्याख्येयम् । तदेतदित्यादिना
लिङ्गादित्यन्त भाष्यं श्रुत्यादित्रयसङ्करनिरासार्थत्वेन व्याख्यातुं

शङ्कां तावदाह * सामर्थ्येनेति * एतदेव विवृणोति * तथा हीति * एतच्छङ्कानिरासार्थत्वेनार्थतो भाष्यं व्याचष्टे * सत्यमिति * यद्यपि ब्राह्मणे मन्त्रे च शक्तिरभिधानाख्या श्रुतिश्चास्ति तथाप्यैन्द्र्या गार्हपत्यस्य प्रकाशनोक्तिः कार्येति शक्त्या नावगम्यत ऐन्द्र्याङ्गत्वमनिश्चैन्द्र्या न अयोगेनाभिधानद्वारा कृतेति श्रुतिलिङ्गयोः परस्परं विवेकः शक्यो वक्तुमित्याशयः । अभिधानद्वारत्वसूचनार्थम् * कार्त्स्न्येनेत्युक्तम् * पूर्वार्धं व्याचष्टे * या हीति * ब्राह्मणपदस्य शक्त्यैन्द्र्या गार्हपत्याङ्गतावगम्यते मन्त्रपदस्य वेति विकल्प्याद्यपक्षे अन्यस्य शक्त्यान्यविनियोगात् ब्राह्मणपदस्य शक्त्या नैन्द्रो मन्त्रो गार्हपत्याङ्गमवगम्यत इत्युक्ते ब्राह्मणपदानामेव तर्हि स्वया शक्त्या स्वेषु स्वेषु ऐन्द्र्यादिविनियोगसम्भवात् श्रुतित्वादभिमतेषु ब्राह्मणादिपदेष्वपि विनियोगहेतुत्वस्यावयलिङ्गोपपत्तेर्न श्रुतेर्लिङ्गाद्विवेको ऽवगम्यत इत्याशङ्क्य लौककार्यविनियोगहेतुत्वे ऽपि तस्य लिङ्गस्य वैदिकविनियोगहेतुत्वाभावात् विवेकासिद्धिरिति परिहारसूचना * येनेत्युक्तम् * प्रतिपदं शक्तिभेदे ऽपि सामान्याश्रयेणैकवचनं गार्हपत्योक्त्यशक्तस्यैन्द्रस्य मन्त्रस्य गार्हपत्ये ऽपि विनियोगान्मन्त्रपदस्य शक्त्या मन्त्रपदस्याङ्गार्हपत्याङ्गत्वं भविष्यतीति द्वितीयपक्षनिरासार्थं ब्राह्मणस्थे पदे मन्त्रपदस्यामशक्तिमिव शक्तिमप्यनपेक्ष्य स्वकीयेप्सिततमत्वायुक्तिसामर्थ्येनैव शात् ईप्सिततमत्वादिषु प्रवृत्तेरैन्द्रस्य मन्त्रस्य गार्हपत्याङ्गमन्त्रत्वमभिधीयत इत्युक्ते कथमशब्दस्य अङ्गत्वोपपत्तिरित्याशङ्क्य मन्त्रशक्तिग्रहणात्प्राक् स्वसामर्थ्यदर्शनादङ्गत्वाभिधाने निष्पन्ने तदन्यथानुपपत्तिगम्यत्वेनाङ्गत्वाभिधानात्प्राक् शक्तिग्रहणात् गृह्यमाणात्स्वरूपेण शक्तेनपेक्षाकाना स्वरूपेणेति न चत्यननाक ऽनवगतापि विनियोगहेतुर्भविष्यतीत्याशङ्क्य ज्ञानस्यैव भावस्य परोक्षार्थज्ञापकत्वानियमाच्च ज्ञाताया शक्तेरङ्गत्वस्य विनियोगे हेतुत्वोपपत्तिरित्याशयेन तेनेत्यनेन परिहृत विनियोगहेतुत्वाभाव कल्प्यमानानर्थक्यमाशङ्क्य कारकहेतुत्वकल्पनार्थवत्त्वं यद्यपीत्यादिना उक्ते शेषविज्ञापनेनैव मन्त्रस्याङ्गत्वादज्ञातशक्तिकस्य च ज्ञापकत्वायोगात् अङ्गिज्ञापकरूपे ऽङ्गत्वे कारकताप्ययुक्तेत्याशङ्क्य विनियोगवाक्यस्य पौरुषेयत्वे सति प्रमाणान्तराग्राह्यस्यार्थस्य स्वयमाक्षेपाशक्तेरङ्गत्वाभिधानात् । प्राक् विनियोगमन्त्रप्रयोक्तुः शेष्यभिधानशक्तिज्ञापनमपेक्ष्य स्यात् तदत्वेन त्वस्यापौरुषेयत्वात् स्वयं प्रमाणान्तरावगतगौणशक्त्याक्षेपत्वोपपत्ते म-

न्त्रप्रयोगकाले शक्तिज्ञानापेक्षायामपि विनियोगकाले ऽनपेक्षणात् युक्ता सद्भावमात्रेण शक्ते कारकतेति यदि तित्सनेन सूचयित्वा पूर्वार्द्धोक्तश्रुतलिङ्गादिविवक्तत्समादित्यनेनोपसहृत । अङ्गत्वज्ञापनाख्यविनियोगविषयत्वनाङ्गत्व लक्षणया विनियोगत्वेनाभिप्रेत्य विनियोगस्याभिधेयत्वोक्ति लिङ्गस्य श्रुतितो विवक्तार्थम उत्तरार्द्धं व्याचष्ट * कदेति * इन्द्राभिधानशक्त्यालोचनात् मन्त्रस्येन्द्राङ्गत्वशक्तिज्ञाने सत्यङ्गत्व कस्मान्नाभिधीयतइत्याशङ्क्य मन्त्राङ्गत्वस्य सिद्धयर्थोऽसौ शक्तिर्नोक्तिरत्वाभिधानसिद्धयर्थेति कृत्वाभिधानतया मन्त्रस्याङ्गस्याभिधायिना युक्तेति परिहारसूचनार्थं न चत्पुरुषकत्वाद्युपगतस्याङ्गत्वाभिधान विधिं विना विहितस्यापि मङ्गस्य सत्कारियत्नादरणीयत्वात मन्त्रस्य चाभिधायकत्वनाभिधानश्रुत्येन्द्रस्य मन्त्रस्येन्द्राङ्गत्वसिद्धिरिति न विहिता इत्यननोक्ते ब्राह्मणे ऽप्यङ्गत्वविधानस्य प्रागनुक्तत्वात् कस्य चिदभावस्य शङ्का निराकर्तुम * ब्राह्मणे त्विस्युक्तम * यथा ब्राह्मणेऽभिधानान्यथानुपपत्तिगम्यत्वेनाभिधानात् पश्चाच्छक्तेर्ज्ञानाद्विनियोगहेतुत्वायोगेनाभिधानस्यैव प्राथम्याद्विनियोगहेतुत्व तथा मन्त्रे ऽप्यभिधानस्यैव प्राथम्याद्विनियोगहेतुत्वापत्तेन लिङ्गस्य श्रुतितो विवेक शक्यो ऽवगन्तुमित्याशङ्कृत * नतु चाति * इन्द्रस्वरूपमात्रस्याभिधानमिति विवेकहेतुमाह * सत्यमिति * विनियोगानभिधाने विनियोगशक्तेकल्पकाभावेनासिद्धं । स्वरूपाभिधानशक्तेश्चाभिधानमात्रहेतुत्वेन विनियोगहेतुत्वाभावात् न शक्त्येन्द्राङ्गत्वसिद्धिरित्याशङ्क्याह * अन्येव चाति * स्वरूपाभिधानान्यथानुपपत्त्या तच्छक्तौ कल्पितायां स्वरूपाभिधानशक्तिबलेन विनियोगयोग्यत्वाख्या शक्ति कल्प्यते तत्र विनियोक्तु शक्यत्वात् कल्पितया श्रुत्या विनियुज्यतइत्यर्थ । पाकादौ शक्तस्यापि देवदत्तादेर्विनियोक्तारमननुविदधानस्य विनियोक्तुमशक्यत्वदर्शनाद्यो यत्कर्तुं शक्तस्स तत्र विनियोक्तु शक्य इति नियमानुपपत्ते कथमभिधानशक्त्या विनियोक्तु शक्यत्व कल्प्यतइत्याशङ्क्य प्रश्नपूर्वं निरस्यति * कथमिति * असौ शक्तो न स्ययक्त इति कर्मोत्पत्तिनिष्ठान्ताभ्यां,शक्यत्वाशक्यत्वोक्ते प्रकरणाम्नातस्य मन्त्रस्य प्रकरणयङ्गत्वे ऽवगते कथ तस्योपकारिष्यतीत्यपेक्षाया शक्त्यालोचनया अनेन मन्त्रेणेन्द्रमभिदध्यादिति विनियोजकश्रुतिकल्पनादवदर्थविनियोज्यत्वावगते विनियोक्तुमशक्याभिधानशक्तिकल्पितयापि श्रुत्युक्तिविनियोज्यत्वायोगात् अभिधानशक्त्या विनियोज्यत्व शक्य इत्यर्थ । श्लोकव्याख्यानाय शक्तश्चैष विनियु-

ज्यते मा विनियोजि न ह्यावद्यविनियोज्यता केन चिदवगतेत्याशङ्क्या-
भिधानशक्त्यैव श्रुतिकल्पनाद्वारा ऽवद्यविनियोज्यतावगतेति सूच-
यितुमाह * ततश्चेति * हेतौ चशब्दः ततो ऽभिधानसाच्छ्रुतिक-
ल्पनाद्वारा यो विनियोगो ऽभिमतः सद्वितीयाद्विनियोक्तुं शक्यत्वक-
ल्पात् सामर्थ्यात्कल्पयिष्यत उपपादयिष्यत इत्येनदर्थमभिधानशक्ति-
बलेनाविनियोक्तु शक्यत्वं कल्प्यतइति क्रियार्थायां क्रियायाम् उपप-
दस्मृतेन लृट्प्रत्ययेन विनियोगशक्तिः कल्प्यतइत्युपपदार्थीकृतविनि-
योक्तुं शक्यत्वकल्पनक्रियया कल्पयिष्यत इति कल्प्तसामर्थ्येवाच-
कल्पयन्युक्तोपपादनक्रियार्थत्वाभिधानार्थः अभिधानशक्तिमात्रात्
विनियोगोपपत्तेर्विनियोक्तुमशक्यत्वकल्पना न कथितेत्याशङ्क्य न प्र-
थमसामर्थ्यमात्रात् विनियोगोपपत्तिरित्याह * नेति * एतदेवो-
पपादयति * प्रथमेन हीति * पूर्वेणावगतो ऽपि विनियोगो द्वि-
तीयं विना न निर्वहतीत्याशयः । श्रुतिलिङ्गयोर्विवेकमुक्तं स्पष्टयति*
अत इहेति * श्रुतौ जातस्वरूपेणासत्येव सामर्थ्ये मन्त्रस्याङ्गतोच्य-
ते लिङ्गे त्वनुक्ताङ्गत्वसामर्थ्यमात्रं प्रतीयते इत्यर्थः । श्लोकं व्याचष्टे

८४१।१ * अविद्यमानमपीति * ज्ञानस्वरूपेणाविद्यमानमेवाभिहितस्याङ्गस्य
विधानात् कल्प्यमित्यर्थः । तदेतदिश्यस्य श्रुत्यादित्रयपरामर्शित्वसूच-
नार्थं सामर्थ्यपूर्वकत्वादित्यादिवार्तिकेनाशङ्कितमपि श्रुतिलिङ्गा-
भ्यां वाक्यस्याविवेकं निरस्यति * वाक्ये पुनरिति * सर्वेष्वेवेति
भाष्यात् श्रुतिलिङ्गविरोधोदाहरणे श्रुत्यादित्रयविवेककथनस्य स-
र्ववाक्येषु विवेककथनार्थत्वावगतेर्वाक्यप्रकरणादिविरोधोदाहरणेषु
प्रकरणादिविवेको ऽपि कस्मात् भाष्ये न पृथक् कथितो वेत्याशङ्क्याह
* कथं भावेति* तदावश्यत्यस्मिन्नर्थे विवेचिते इति णिच्प्रत्यययो-
गेन कथित इति वाच्ये प्रत्ययानुग्रहार्थो धातुः व्याख्याते ऽर्थे श्रुत्या-
दित्रयशङ्कानिरासप्रतिज्ञानार्थं तदिति भाष्यावयवं योजयति * त-
द्विति * लिङ्गाच्छ्रुतिविवेकोपपादनार्थं न त्वेवमिति भाष्यावयवं
योजयति * गार्हपत्ये पुनरिति * का पुनरत्र श्रुतिरित्यादिभाष्येण
श्रुत्यादिविवेकोक्तेः । ऐन्द्रयुदाहरणे श्रुतिलिङ्गविरोधोपपादनार्थत्व-
सूचनार्थत्वेन यदि त्विति भाष्यं व्याख्यातुमाह * इतीति * यथे-
यमित्यादिभाष्ये चोभयोर्वाक्यत्वात् श्रुतिलिङ्गविरोधोदाहरणत्वा-
योगे शङ्कितेनैव श्रवणात् गम्यते नापि शब्दान्तरस्य समीपे उच्चारि-
रितसामर्थ्यमप्यस्ति येनैतत् गम्यतेत्यनेनैन्द्रीत्वस्य वाक्यीयस्य
श्रौतत्वनिरासे ऽपि न त्वेवमस्यामृचि सामर्थ्यमालोच्यैव वाक्यात्
ऐन्द्र्या गार्हपत्योपस्थानं भवतीति अनेन गार्हपत्याङ्गत्वस्य लै-

ङ्गिकत्वनिरासे ऽपि वाक्यीयत्वानिरासात् वाक्यीयत्वाभ्युपगमे प्रतीते यथा गार्हपत्यशब्दमात्रात् गार्हपत्यप्राधान्यप्रतीतावपि मन्त्रस्य वाक्याधीनत्वादैन्द्रीवाक्ये वाक्यस्य विनियोजकताऽभ्युपगम्यते तथेन्द्रशब्दमात्रस्य लिङ्गादिन्द्राङ्गत्वप्रतीतावपि शेषाणां मन्त्रपदानामिन्द्राङ्गत्वस्य वाक्याधीनत्वात् कृत्स्नस्य च पदस्याप्रधानत्वेनाविनियोजकत्वात् मन्त्रे ऽपि वाक्यस्य विनियोजकताऽभ्युपगन्तव्येत्याशङ्कोत्थानादथ चेति भाष्येणाथवा वाक्यस्य विनियोजकत्वे निरस्ते मन्त्र कृत्स्नस्य पदस्याभिधानाशक्तत्वेऽनिराकाङ्क्षीकरणसमर्थपदान्तरान्वयं विना सम्पूर्णव्यवहारानङ्गत्वेनाप्रयोज्यतया विनियोक्तुमशक्यत्वात् इन्द्राभिधानशक्तेन्द्रपदैकवाक्यत्वाच्चावशिष्टानामपि पदानां विशेषणाभिधानद्वारेन्द्रप्रकाशनशक्त्युपपत्तेः पदमात्रे च लैङ्गिकविनियोगस्य पर्यवसानाभ्युपगमे लिङ्गविरोधाद्वाक्येन कृत्स्नमन्त्रविनियोगापत्तेरिन्द्रपदसामर्थ्येन कृत्स्नमन्त्रविनियोगाय पदान्तराणामिन्द्रविशेषणाभिधानासामर्थ्यसम्पादनमात्रे वाक्यव्यापाराङ्गमात् लिङ्गेनैव कृत्स्नमन्त्रविनियोगसिद्धेर्न वाक्यस्य विनियोजकतेतीन्द्रशब्दवत् कृत्स्नस्य मन्त्रस्येन्द्रप्राधान्यमिति भाष्येणोपपादितत्वात् लिङ्गत्वमभ्युपगम्य ब्राह्मणवाक्यस्य विनियोजकत्वनिरासयुक्त्यनभिधानादेव तर्हि लिङ्गवाक्ये इति भाष्येण पुनः प्रत्ययस्थानामपि व्युत्क्रमया परया भाष्यव्याख्यां दूषयितुम् उपन्यस्यति * अन्नेति * प्रश्नपूर्वकमपकर्षहेतुमाह * कुत इति * शङ्कावादिनैव तर्हि लिङ्गवाक्ये इति लिङ्गशब्देनेन्द्रोपस्थानकस्य प्रमाणस्य लिङ्गत्वाभ्युपगमात् पुनर्वाक्यत्वाभिधानाशक्त निरासार्थम् अथ चेति भाष्यमथ तर्हि त्यत पश्चाद्वस्तव्यमित्याशय । क तर्हि अथ चेत्यय ग्रन्था वाजनीय इत्यपेक्षायां यत्र यथमिति भाष्ये द्वयोर्वाक्यत्व शङ्कते तत्रैव तदभिधीयत इत्यादिना ततो गार्हपत्येन द्वयोर्वाक्यत्वसम्भवे ऽपि श्रुतिलिङ्गोक्तावदन्योन्यविवेको ऽस्तीत्युक्तवाक्याद्विवेकोक्तये ऽथ चेत्यनेनैकवाक्यत्वापादानरासो च कल्प्यते इत्यभिधानपूर्वकं सम्यक् व्याचष्टे * यत्रेति * ८४२।१ दूषयति * न त्विति * यद्यथमिति भाष्यस्य श्रुतिलिङ्गयोर्वाक्यत्वोक्त्या वाक्याद्विवेक शङ्कित्वा श्रुतिलिङ्गवाक्यानि विवेकत्वानीति अनेन द्वितीयासामर्थ्यात् गार्हपत्यप्राधान्यप्रतीतेः श्रुतेर्लिङ्गत्वेन लिङ्गाद्विवेक मन्त्रेन्द्राभिधानात् इन्द्रप्राधान्यात् इन्द्रप्रतीतेः लिङ्गस्य श्रुतित्वेन श्रुतेरविवेकः वाक्य चर्वेदग्ने आग्नेरजायनेत्यादिभिरुपक्रमस्थैः पदैर्देवाभिधानादुपश्रवञ्चेत्यादीनां चोपसंहारस्थानामाङ्क्ष्वादिपदानां

वेदाभिधानसामर्थ्यात् उपवेषस्यादीनां वेदधर्मत्वप्रतीतेर्वाक्यस्य श्रुतिलिङ्गाभ्याम्। अविवेक इति शङ्कात्रयसूचनाच्छङ्काचतुष्टयमध्ये कदाचनस्तरीरसीत्यनेन मन्त्रेणेत्यादिभाष्येण लिङ्गश्रुतिवाक्याभ्यां विवेकाभिधानात् तृतीयशङ्कालिङ्गांशे चाद्यां परिहृत्य नत्वेवमित्यादिना श्रुतेर्लिङ्गात् विवेकाभिधानात् द्वितीयां परिहृत्य वाक्यस्य श्रुतिलिङ्गाभ्यामविवेक इत्यनिष्टापादनं कृत्वा तदतत्सर्वेष्वेव समवेत विविक्तं च दृश्यतइति प्रतिज्ञामात्रेण निरासासिद्धेस्तत्परिहारमुपपाद्य तत्परिहारकाले ऽपि लिङ्गयोर्वाक्यादविवेक इत्याद्यशङ्का लिङ्गांशमापि शब्दान्तरस्य समीपे उच्चरितस्य सामर्थ्यमस्तीत्यनेन परिहृतत्वादुपेक्ष्यैव तर्हीत्यनेन श्रुत्यंशे ऽनुभाष्य नैतदेवमित्यनेन श्रुतवाक्ययोरविवेके ऽपि श्रुतेरेव लिङ्गविरोधेन वाक्यस्यात्यपि विवेकाभ्युपगमेन परिहारे दत्ते लिङ्गस्यापि तर्हि वाक्यादविवेकाभ्युपगमापत्तेः कृत्स्नस्य मन्त्रस्य श्रुत्या गार्हपत्ये विनियोगात् कृत्स्नस्य मन्त्रस्यैन्द्रे विनियोजकेन वाक्येन विनैव श्रुतेर्विरोधप्रतीतेः पदमात्रविनियोजकेन लिङ्गेन विरोधाभावात् श्रुतिवाक्ययोरसम्प्रधारणापत्तेर्न श्रुतिलिङ्गविरोधोदाहरणता युक्तेति लिङ्गांशे वाक्यत्वादाशङ्कापरिहारार्थत्वाच्छङ्काया नापि शब्दान्तरस्येत्यनेन परिहृताया अपि श्रुतिरप्यनेन पुनरुज्जीवनमाशङ्क्याथ वेत्यनेनोभयोर्वाक्याद्विवेकाभिधानात्परिहारः सम्भवतीत्याशय। एतच्चाथ वेत्यस्याद्यशङ्कापरिहारार्थत्वादादौ निवेशो युक्त इत्यपकर्षवाद्याशयमापाद्योक्तं प्राकाथ वेत्यनेनाभयार्वाक्यत्वे निरस्ते श्रुतेर्वाक्यत्वशङ्कानुत्थानात् एव तर्हीत्यत्र वाक्यशब्दो न युज्येतेत्याह * अपि चाते * अपकर्षवाद्युक्तम् अपकर्षकारणं त्रेधा निरस्यति अत या देवताविशेषवक्तु शक्नोति इन्द्रशब्दः सो ऽस्यामृचि विद्यते कर्मसमवेतत्वात् चैन्द्रशब्दोक्तया देवतया प्रयोजनमस्तीति एवशक्त्यालोचनमात्रेण सा उपस्थातव्या इत्येव गम्यते न त्विन्द्रशब्दश्रवणमात्राच्छब्दान्तरसमीपादेत्युक्ते कथमिन्द्रशब्दशक्तिमात्रात् कृत्स्नस्य मन्त्रस्येन्द्राङ्गत्वावगतिरित्याशङ्क्य यन कारणेनेन्द्राभिधायकः शब्दो ऽस्मिन् मन्त्रे प्रयुज्यते तदेकवाक्यत्वेन चावशिष्टानि पदानि प्रयुज्यन्ते तेन कारणेन कृत्स्नस्य मन्त्रस्येन्द्राङ्गतावगम्यते इति शक्त्येकवाक्यत्वाभ्यां मन्त्रस्येन्द्राङ्गतावगमाभिधानात् वाक्यसङ्कीर्तनमेव लिङ्ग श्रुतिलिङ्गविरोधाभिधायिनो ऽभिमत इति मन्यमानेनाक्षेपा यद्यपि विध लिङ्गं तवाभिमतं तथापि लिङ्गवाक्यविरोधापत्तेः श्रुतिविरोधोदाहरणता न युक्तेत्यभ्युपेत्यवादमात्रेण लिङ्गत्वस्योक्तत्वात् आक्षेप्तुर्वाक्यत्वा-

भिप्रायस्य नापिशब्दान्तरस्य समीपे उच्चरितस्य सामर्थ्यमस्तीत्यनेन केवलस्य वाक्यस्य विनियोजकत्वं निरस्यतापनीतस्यापि लिङ्गसहितं वाक्यं विनियोजकं भविष्यतीति शेषमपनेतुमथ वत्यनेन उभयथ वाक्यस्य निरासो युज्यते यद्वा श्रुतेरेव केवलया वाक्यात् विवेकायैन्द्रीवाक्यस्यैकवाक्यत्वस्य विनियोग प्रयोजकतया विवक्षिता न मन्त्रस्य दृष्टान्तार्थं तु मन्त्रस्यैकवाक्यत्वस्य कारणत्व पूर्वोक्तमेव प्रसङ्गात् स्मारितमित्येवं यथान्यासमेव स्थिते ग्रन्थसन्दर्भे व्याख्यानं कार्यमिति भावे क्रत्योरपत्तेरर्थः क्रमेन यथान्यासमेव व्याख्यातुमेवं तर्हीति भाष्यस्य वाक्यं इत्यादिरययवं येन्द्रयाः कश्चिदुपस्थानाहंपदार्थं प्रति तृतीयाश्रुत्यप्रतीतेर्गार्हपत्यस्य च कं चिन्मन्त्रं प्रति द्वितीययाश्रुत्यप्रतीतेर्वाक्यत्वे सत्यपि श्रुतेरपि विनियोजकत्वासम्भवेन श्रुतिलिङ्गविरोधसम्भवादयुक्तमाशङ्कोपपादयति * तत्रेति * श्रुतेर्वाक्यात् विवेकाभावे ऽपि श्रुतेरेवात्र लिङ्गविरोधो न वाक्यस्येत्याशङ्कापरिहारार्थं नैतदिति भाष्यमैन्द्र्याचारणादिवाक्ये श्रुत्या क्रियमाणे वाक्येन क्रियाविशेषे प्रकरणेन प्राकरणिके विनियोगे इत्येवं वादिमते ऽथ वेत्यस्य वाक्यव्यापारनिरासार्थत्वायोगात् भाष्यद्वये ऽपि श्रुतिविरोधमात्रोक्तेः पौनरुक्त्यमाशङ्का प्रतिपादकेश्रुतिविरोधोक्त्यर्थत्वेन व्याचष्टे * नैतदिति * गार्हपत्यशब्दस्य यौगिकत्वात् गौणत्वादैन्द्रार्थत्वाभावे ऽपि द्वितीयाया. सप्तम्यर्थवृत्त्या गार्हपत्यसमीपे तिष्ठन्निन्द्रमुपतिष्ठेतेत्यैन्द्र्या विरोधो भविष्यतीत्याशङ्का विभक्तिश्रुत्यनुग्रहीतया प्रातिपदिकश्रुतविरोधोक्त्यर्थमग्निसमीपं चेति भाष्यावयव व्याख्यातुम् अग्निसमीपं वा लक्षयेदित्युक्तम् । समुदायप्रसिद्धिपरित्यागोक्त्या गौणस्यसामीप्ये लक्षणयोर्निरासः । अथ वेतिभाष्ये प्रतिपदिकश्रुत्यनुगृहीतविभक्तिविरोधोक्त्यर्थत्वेन व्याचष्टे * अथ वेति * श्रुतिविरोधयोः प्रातिपदिकविभक्तिभेदादपौनरुक्त्ये ऽपि लिङ्गविरोधस्य नापि शब्दान्तरस्य समीपे उच्चरितस्य इत्यनेन मन्त्रे वाक्यस्य विनियोजकत्वनिरासेनोक्तत्वात् श्रुतिवच्च लिङ्गवैलक्षण्यानुपलम्भाच्चैकवाक्यत्वादिन्द्रप्राधान्यं किं न इन्द्रशब्दवत्वात् मन्त्रस्येति लिङ्गस्यैव श्रुत्या विरोधो न वाक्यस्येति लिङ्गविरोधोक्तेः कथमपौनरुक्त्यम् इत्याशङ्क्य नापीत्यनेन केवलस्य वाक्यस्य विनियोजकत्वे निरस्ते ऽपीन्द्रशब्दस्य लिङ्गेनावशिष्टानां च पदानां वाक्येन विनियोगात् लिङ्गसहितस्य वाक्यस्य कृत्स्नविनियोजकत्वावगतेः पदमात्रविनियोजकत्वेन च लिङ्गस्य कृत्स्नमन्त्रविनियोजकतया श्रुत्या विरोधाभावात् वाक्यस्यैव श्रुत्या

८४३।५

विरोध इत्येवं वाक्यस्यविषयदीर्घत्वप्रदर्शनपरतयापि केवलस्य सम्पूर्णव्यवहारानर्हत्वेनाप्रयोज्यतया विनियोगानर्हत्वात् इन्द्रविशेषणोक्तिद्वारा चावशिष्टानामपि पदानामिन्द्राकाङ्क्षायुपपत्तेः श्रुतिवाक्याभ्यां सामान्यविशेषविनियोगवत्त्व पदमात्रकृत्स्नमन्त्रविनियोगयोरन्योन्योपकारित्वाभावेन विरोधाल्लिङ्गविरोधिवाक्येन स्योनादिमन्त्रवत् कृत्स्नमन्त्रविनियोगायोगात् लिङ्गविनियोगापेक्षितपदान्तराणामिन्द्रविशेषणाकाङ्क्षासामर्थ्यस्य सम्पादनमात्रे वाक्यस्य व्यापारो न विनियोग इत्येवम् । एकवाक्यत्वस्य विनियोगव्यापारनिरासमात्रार्थे नैकवाक्यत्वात् इन्द्रप्राधान्यमित्युक्तमित्येव परिहरति * लिङ्गेति * श्रुतिवाक्ययोर्द्वयोरपि अत्र विनियोजकताभ्युपगमे श्रुत्यनपेक्षस्य वाक्यस्य लिङ्गाविरोधाद्वाक्यानपेक्षाया श्रुतेरपि ऐन्द्रयाथस्तृतीयाश्रुत्येत्यादिवार्त्तिकोक्तन्यायेनाविरोधात् श्रुतेरेव विरोधो न वाक्यस्येति परिहारो न युक्त इत्याशङ्क्याक्षिपति * कथं पुनरिति * आक्षेपनिरासोक्तेरेतत्परिहारार्थत्वेन भाष्यव्याख्यानापरितोषात्क्षमतेनाप्यथ चेति भाष्यस्य मन्त्रब्राह्मणे ऽपि एकवाक्यत्वस्य विनियोगव्यापारनिरासार्थत्वेन व्याख्यासूचनार्थे विरोधे शीघ्रप्रवृत्तया श्रुत्या लिङ्गादिकल्प्यश्रुतिप्रतिबन्धवद्विरोधे ऽपि क्रियासामान्यस्य विरोधित्वेन साक्षात्परम्परया वा पुरुषार्थाननुबन्धितया वैयर्थ्याद्धात्वर्थानवच्छिन्नभावनाभयत्वेनासामान्योक्तेः सत्याधिकरणभाष्ये धात्वर्थानवच्छिन्नाया भावनाया धर्मान्वयस्य निराकरिष्यमाणत्वेन दोषत्वात् । महत्त्वात्सामान्ये वा विनियोगायोगेन क्रियाविशेषे ऽङ्गविनियोगं विना तृतीयाश्रुत्यपर्यवसानात् विधेयं स्वविषयस्य साक्षात्स्वतः समीहिताङ्गत्वे समीहितविशेषणसमर्पणद्वारा द्वितीयायाः प्रकृत्यर्थे ऽङ्गविनियोजकत्ववत्तोक्तविधिविहितस्यैवाङ्गस्य द्वितीयाविनियोज्यत्वावगतेरङ्गमात्रविनियोगे पर्यवसानायोगादक्षरश्रवणकृत एवाय गार्हपत्याङ्गप्रत्यय इति वार्त्तिकाच्च विशेषविनियोगपरश्रुतिपर्यवसानावगतेरैन्द्र्या गार्हपत्याङ्गत्वबोधाख्ये विनियोगे शीघ्रप्रवृत्तया श्रुत्या वाक्यकल्प्यश्रुतिप्रतिबन्धाद्विनियोगव्यापारानुपपत्तेर्न वाक्यलिङ्गविरोध इत्येवं परिहरति * उच्यत इति * कल्प्यश्रुतिप्रतिबन्धसूचनार्था दृष्टान्तोक्तिः । सैव प्रवर्त्तत इति । एवकारेण वाक्यप्रवृत्तिं निरस्तां सुपपादयितुं श्रुतिकल्पनप्रतिबन्धोक्तौ पूर्वप्रवृत्त्युक्तिः श्रुतेः शीघ्र प्रवृत्तावपि सामान्यविषयत्वादविरोधे वाक्यप्रवृत्तेश्च निरासाद्वाक्यविरोधमाशङ्क्य श्रुतिलिङ्गविरोधवाक्ये चाविरोधं वक्तुं

विषयत्वं सूचयितुमाह * यद्यपीति * विशेषविषयत्वं विना प्रतियो-
गित्वायोगात् प्रतियोग्युक्त्या विशेषविषयत्वं सूचितं परिहारा-
शयाज्ञानाच्छङ्कते * ननु चेति * तृतीयया गार्हपत्यमेव प्रत्यैन्द्र्या
शेषत्वोक्तेर्द्वितीयया चेन्द्रीमेव प्रति गार्हपत्यशेषत्वोक्तेः श्रुत्यैव विशेष-
विनियोगकृतवाक्यस्य विनियोजकत्वायोगात् विशेषविनियोगप्रवृत्त्या-
श्रुत्यपेक्षितविशेषणविशेष्यान्वयमात्रार्थत्वात्तगतश्रुतेरेव लिङ्गविरोधेन
बाधकत्वेऽपि स्वाभिमतपरिहाराशयविवरणनाशङ्कां निरस्यति *कथमि-
ति*एकश्रुतिकृतोऽन्यो वाक्यकृत इत्येवं प्रत्येकं व्यवस्थितनाङ्गाङ्गान्व-
यस्य वाक्यकृतत्वाभावाद्वान्वयस्य लिङ्गविरोधाभावेऽपि श्रौतत्व-
तस्य सामान्यतोऽङ्गाङ्गान्वयस्य कथं विरोध इत्याशङ्कां विशेषितं
एवाङ्गाङ्गान्वयं श्रुत्या क्रियत इति सूचयितुं * तथेत्युक्तम् *
निष्पातद्वन्द्वयुक्त्या वाक्यस्याङ्गाङ्गान्वये व्यापाराभावः स्पष्टीकृत
कीयाऽन्वयबलश्च समवायो हि सत्यपीत्यादेस्तु परमत स्थित्यो-
क्त्यादिह वाक्यस्य क्रियासम्बन्ध श्रुत्यत्यादिश्रुतद्वन्द्वानुसार
णैव व्याख्यातत्वान्न पूर्वापरवार्तिकविरोधः । तद्भाष्योक्तं द्वितीया-
श्रुतलिङ्गविरोधमुपपाद्य विध्यानर्थक्यपरिहारार्थेवेन्द्र्यतिरिक्ताङ्ग
त्वस्यैन्द्र्या कल्प्यत्वनाख्यातान्वयाधीनत्वात् वाक्यानपेक्षायास्तृ-
तीयाश्रुतेरपि लिङ्गविरोधायोगात् । स्वानभिमतमपि तृतीयाश्रुतलिङ्ग-
विरोधं प्रौढिप्रदर्शनायाह * अथ वेति * श्रुतिलिङ्गविरोधोपसं-
हारार्थं तस्मादिति भाष्यं व्याचष्टे * तस्मादिति * श्रुतिलिङ्गवि- ८४७।१
रोधोपपादनस्य सूत्रोक्तसमवायोपपादनार्थत्वं सूचयितुं श्रुतिलिङ्ग-
विरोधोपपादनभाष्यं व्याख्याय भाष्यं एवं व्याख्यानात् प्राक् सूत्र
व्याख्यातुं पूर्वपक्षं तावदाह * किं तावदिति * श्रुत्याद्यनुमान-
द्वारा लिङ्गादीनां प्रामाण्यात्प्रत्यक्षादिविरोधं च लिङ्गादिभिः श्रु-
त्यात् प्रत्यक्षश्रुतिविरुद्धयास्येत्यशक्ते कल्पयितुमशक्यत्वात् कथं
तुल्यबलत्वायोगेन प्रश्नपूर्वमुपपादयति * कुत इति * स्वप्रकृ-
तित्यनेन स्वतः प्रामाण्यात्स्मृतिवैरूप्यं सूचितम् । स्वतः प्रामाण्य
स्यापि न कश्चिद्वाधात् अप्रामाण्यं प्रत्यक्षादिबद्धविष्यतीत्याशङ्क्याह
* सर्वत्रेति * प्रत्यक्षादावपि किञ्चित्प्रमाणमेव कश्चिच्च प्रमाणा-
भास एवेति नियतैकरूपप्रकारद्वयातिरिक्ताद्वैरूप्यलक्षणप्रकारान्त-
राभावात् प्रमाणस्याभासता । आभासस्य वा प्रमाणता नास्तीत्युक्त
त्वाता ऽन्यथात्वाभावेऽपि वाक्यादप्रमाणस्य प्रामाण्यं भविष्यती
त्याशङ्क्य बाधफलकत्वात्प्रामाण्यस्य न कदाचित्प्रमाणस्य बाधो
बाध्यस्य वा प्रमाणत्वमित्युक्त्वा मपि तर्हि प्रमाणाभासा एव बाधिष्य

न्त इत्याशङ्क्य प्रत्यक्षस्येन्द्रियसन्निकर्षार्थविषयत्वात् इन्द्रियार्थस-
न्निकर्षाविषयसञ्चारः ऽनुमानस्य व्यापकविषयत्वाद्व्यापकवि-
षयत्वाद्व्यापकाविषयसञ्चारः प्रमाणाभासेति एवं सर्वेषां विष-
यान्तरहेतुत्वात् प्रमाणाभासत्वस्य श्रुत्यादीनां चाभिधेयान्त-
र्भावाद्विनियोगे वृत्त्यन्तराकाङ्क्षमनीपायाभावात्समानविषयात्समाधया-
नात् स्वविषयाद्विषयान्तरसञ्चाराभावेन प्रमाणाभासत्वं ना-
स्तीत्युक्तम् । नचानुत्पत्तिविनाशसंस्काराच्छादं फलापहारा-
णां बाधप्रकाराणां मध्ये कश्चिदत्र सम्भवतीत्याह * न
चेति * बाध्यत्वाभिमतं विज्ञानं स्मृत्याद्यकार्यदर्शनेन
नुच्छेदोपपादनार्थं स्मृतिहेतुताका तुल्यबलत्वे पूर्वपक्षे सम्प्रयोजन-
मुपसंहरति * तस्मादिति * बलाबले वैपरीत्यपूर्वपक्षान्तरमाह *
बाधस्त्विति * श्रुत्यादिकल्पनाद्वारापि लिङ्गादीनां प्रामाण्यविरोधे
ऽपि स्मृतिपक्षान्त्यादिवत्तुल्यान्यतरमूलत्वाद्योगेन श्रुत्यादिकल्पन-
स्य दुर्बलस्थानकल्पनापक्षे तत्र श्रुत्यादिभ्यः पश्चात्प्रवृत्तं कल्प्य
श्रुत्याद्यपेक्षत्वे ऽपि च विरोधिश्रुत्यादिपक्षश्रुतत्वात् ।
पौर्वापर्यबलीयस्त्वं यावनैव वैपरीत्यं युक्तमित्यर्थः । श्लोकं
व्याचष्टे * श्रुत्यादीनामिति * परदौर्बल्यहेतुत्वेन सिद्धान्त्युक्तस्य
विप्रकर्षस्य पूर्वदौर्बल्यापादकत्वाद्विपरीतसाधनतामुक्त्वा विप्रकर्षे
परत्वादपि बलाबलवैपरीत्यमित्याह * किं चेति * यद्यपि श्रुत्या
विनियोगः प्रतीयते तथाप्यशक्तस्य नाङ्गकल्पनेत्यपिशब्दार्थः ।
सामर्थ्यैकगम्यस्य त्वाकाङ्क्षारूपाणां तु लिङ्गवाक्यप्रकरणानामेवं
वाक्यत्वाकाङ्क्षासन्निधिरूपैर्वाक्यप्रकरणस्थानैर्विना रूपमेव नास्ती-
त्यर्थः । श्रुतं शक्त्यपेक्षत्वे ऽपि विनियोगानुसारिशक्तिकल्पनया वि-
नियोगो ऽवकल्पत इत्याशङ्क्याह * उत्पत्तीति * प्रागविद्यमानसा-
मर्थ्यविनियोगादपि विनियोजकादस्यापि च श्रुत्या विरोधाभावात्सा-
मर्थ्यस्यैवाविनियोजकत्वावगतेर्बलीयस्त्वादनुमानकालावगतस्येन्द्रि-
यादिविषयसामर्थ्यस्य श्रौतविनियोगकाले निवर्त्तनाशक्तेर्गार्हपत्यशक्ति-
कल्पनायोगाल्लिङ्गानुसारेणैन्द्र्या एव विनियोगो युक्त इत्यर्थः । लि-
ङ्गस्य वाक्यापेक्षतामुपपादयति * केवलेति * केवलस्य पद-
स्याप्रयोजकत्वे वा विनियोजकत्वात् लिङ्गेन कृत्स्नमन्त्रविनियो-
गार्थं मन्त्रवाक्यस्यासमवेतार्थस्यापि द्रव्यत्वाद् पदस्य समवे-
तार्थनिरपेक्षत्वादिपदेन सहैकवाक्यतालक्षणसम्बन्धबलेन निर्वा-
पादिविषयशक्तिकल्पनेन विनियोगदर्शनात् । लिङ्गस्य वाक्यापेक्षाय-
गत यस्य मन्त्रान्तरस्थपदस्य यत् मन्त्रान्तरस्थपदेन सहैकवाक्य

तालक्षणाः सम्बन्धो न विद्यते । तस्यैव विनियोज्यपदार्थविषय-शक्तिर्न कल्प्यते । तस्मिन्सीद तवैव सदनं कृणोमीत्यनेन सहैकवाक्यतालक्षणो सम्बन्धे सति तदन्यथानुपपत्त्यैव तस्मिन्सीदेत्यादेः सदनकरणविषयशक्तिसिद्धेः स्योनं तइत्यादेश्च सीदेत्यनेन सहैकवाक्यतालक्षणसम्बन्धान्यथानुपपत्त्या सादनविषयसिद्धेर्वाक्यस्यैव लिङ्गाद् बलीयस्त्वेत्यर्थः । वाक्यस्य प्रकरणापेक्षामुपपादयति * तथेति * प्रकरणस्य क्रमापेक्षितामुपपादयति * तथा सर्वाकाङ्क्षेति * आकाङ्क्षायाः सम्बन्धसिद्ध्यर्थत्वादसम्भवत्सम्बन्धिवैफल्यापत्तेः । नाकाङ्क्षा युक्तेति सूचनार्थम् * सम्बन्धं वेत्युक्तम् * समाख्यायां कथं बलीयस्त्वेत्यपेक्षायामाह * समाख्या पुन रिति * वैपरीत्यपक्षमुपसंहरति * तस्मादिति * समुच्चयेन पूर्वपक्षमाह । * अथ वेति * सूत्रेण सिद्धान्तमाह * इतीति * प्रश्नपूर्वं लिङ्गादौ विनियोगावयवसामर्थ्यस्य विप्रकर्षहेतुमाह * कुत इति * पूर्वार्द्धं व्याचष्टे * यदेव हीति* पठितश्रुतिग्रहणे प्रत्यक्षः समुदायो पठितश्रुतिग्रहणे लिङ्गादीत्याशयः । चोदावस्थानोपपादनार्थं पूर्वपक्षाशयमुपन्यासपूर्वं दूषयितुमाह *कथं पुनरिति* चोदनाशब्दाद्विधाय्येव श्रुतिः प्रमाणम् । न विनियोक्त्रीत्याशङ्क्य शब्दमात्रमेव धर्मप्रमितिशक्तिप्रदर्शनार्थं चोदनाशब्देन विवक्षितमिति सूचनार्थम् * तथा चेत्युक्तम् * एवं सति षट्प्रकारत्वं भवतीत्याह * तत्रेति * उत्तरार्द्धं व्याख्यातुमाह * ततश्चेति * प्रस्तितयोः प्रवृत्तयोर्मध्य-इत्यर्थः । विरोधे ऽपि श्रुतिकल्पनस्य दुर्वारत्वात् । श्रुतिकल्पनात्वनिबन्धनविप्रकर्षस्य बलाबलवैपरीत्यापादकत्वं बाधो यदि कल्प्येतेति द्वितीयपूर्वपक्षवार्त्तिकोक्तं निराकर्त्तुमाह * तस्मिंश्चेति * आकाङ्क्षारूपप्रकरणाद्यगतसामान्यव्याप्तेक्षत्वेनाकाङ्क्षासहितस्य लिङ्गस्य विनियोजकश्रुतिकल्पनात्वे नैराकाङ्क्ष्ये ऽसति सामग्रीवैकल्याच्छ्रुतिकल्पनानुपपत्तेः श्रुतिं विना विनियोगासिद्धेर्लिङ्गप्रामाण्याद्वैपरीत्यं दूरोत्सारितमित्याशयः न केवलं प्रकरणानुमानान्यथानुपपत्तेः परिहृतत्वात् श्रुतिकल्पनायोगात् किं तु विध्याकाङ्क्षासहितानामेव श्रुत्यादीनां विनियोजकत्वात् । प्रत्यक्षाया च विनियुक्ते मन्त्रे विध्याकाङ्क्षानिवृत्तेर्विध्याकाङ्क्षावरुद्धादपीति सूचयितुं संनिकृष्टो न लभ्यते प्रकृष्टो ऽपि वैदिकः*अपवादस्तु तस्य स्यात्*प्राप्तः सन्निहितो यदेत्युपरङ्गाधिकरणवार्त्तिकोक्तामाकाङ्क्षां विना कल्पितस्य वैदिकत्वं स्मारयति * वर्णितं चेति * विप्रकर्षस्य विपर्ययसाधनत्वनिरासमुपसंहरति * तस्मादिति * पूर्वश्लोकेनैतदेव दृढयति * आह चे-

ति * इममेव श्लोकं व्याचष्टे * श्रुत्यादीनां हीति * पौर्वापर्ये पूर्वदौर्बल्यमिति न्यायस्यान्योन्यानपेक्षबुद्धिजन्मविषयत्वात् सापेक्षे लिङ्गादावप्राप्तिसूचनार्थम् * न हीत्युक्तम् * विप्रकर्षवैपरीत्ये श्रुत्यापि नासमर्थस्येति वार्त्तिकोक्तं दूषयितुमनुभाषते * नन्विति * दूषणप्रतिज्ञानानि * सत्यमिति * प्रश्नपूर्वकमुपपादयति * कुत इति * शक्तिकल्पने विनानुपपत्त्यपरिहारे ऽपि अङ्गत्वरूपज्ञानोत्पादनेन श्रुतं शक्त्यपेक्षेति पूर्वार्द्धेनोक्तं ज्ञानस्याप्यङ्गत्वज्ञानस्य शक्तिं विना कथं प्रमितत्वनिर्वाह इत्याशङ्क्य निरासार्थमुत्तरार्द्धं व्याचष्टे * विनियोगानि * स्वाभाविकशक्तिनिष्ठुरया शक्त्यन्तरस्यानवकाश

८४७।१ दर्शनात्सैवानुपपत्तिरिति परिहारं सूचयितुमाह * तत्रेति * स्वाभाविकशक्त्यनिष्ठुरयोगवादी स्वाभिप्रायं प्रकटयति * ननु चेति * अनुमेयस्य लिङ्गस्य दुर्बलतरत्वोक्त्यानुमापिकाया श्रुतेर्दुर्बलत्वमुक्तम् । विनियोगात्प्राक् सामर्थ्ये कल्प्यमाने तत्कल्पिकाया श्रुतेस्तदानीमविनियोजकत्वाच्छ्रुतिविरोधाभावेन प्रत्यक्षस्य सामर्थ्यविनियोजकत्वापत्तेः कल्प्यस्य सामर्थ्यस्य प्रत्यक्षदुर्बलतरतापद्येत । ननु विनियोगात्प्राक् तत्कल्पनास्तीत्याह * सत्यमिति * एव विप्रकर्षवैपरीत्यनिरासेन बलाबलवैपरीत्ये निरस्ते मन्त्रप्रकरणिनोश्च नैराकाङ्क्षयोक्त्योभयत्र विनियोगनिरासात् । समुच्चयपूर्वपक्षस्यापि निरासं सूचयते विनियोजकश्रुत्यपेक्षितस्य शक्तिकल्पनस्य पश्चाद्भावे सिद्धान्त्युक्तमाश्रित्य विप्रकर्षतुल्यत्वादन्यूनतां शङ्कते * नान्वति * श्लोकं व्याचष्टे * सर्वथा हीति * एवं विधविप्रकर्षसाम्यं बलाबलसाम्येनापपादयतीति परिहरति * सत्यमिति * प्रश्नपूर्वं बलाबलसाम्यानापादकतामुपपादयति * कुत इति * लिङ्गविनियोगाभिधानात् पूर्वं श्रुत्यनुमानात् विनियोगाभिधानस्य दूर्[illegible] श्रुतौ तु विनियोगोत्तरकालं शक्त्यनुमानं न विनियोगोक्तेर्दूरतल्यर्थं । श्लोकं व्याचष्टे * लिङ्गे हीति * श्रुतो विनियोगप्रत्ययस्योत्पत्तिविक्षेपाभावे ऽपि प्रमितत्वनिर्वाहाय विक्षेपस्य लैङ्गिकेन विनियोगप्रमितिविक्षेपेण साम्यात्तुल्यबलतैव युक्तेत्याशङ्क्याह * सहेति * प्रस्थानप्रायत्वेन विनियोगस्य दृष्टान्तत्वोपचारात् सह विनियोगाख्यं देशं प्रस्थितयो सतो प्रमाणयोरर्थेन विक्षेपेण कृत्वा प्रमाणस्य चिरेण विनियोगप्राप्तिः सम्भवति तस्यैव दौर्बल्यकरत्वाद्विनियोगप्रत्ययोत्पत्त्युत्तरकालं तस्य प्रमितिप्रयोजकनिर्दोषकारणजन्मत्वावगमं प्रमितत्वावश्यम्भावावगमात् । प्रमितित्वनिर्वाहायापवादकशक्तिनिरासार्थं शक्त्यनुमानविक्षेपे ऽपि न विनियोगविपरीतता नापि तुल्यो

विप्रकर्षे इत्यर्थः । प्रत्युपयुज्यतइति हिशब्दान्वयाध्याहारार्थं युगलान्तरेष्वेतमेव न्यायमतिदिशति * यत्नेनेति * प्रकरणाम्नातस्य देवस्यत्वेत्यादेरसमवेतार्थस्य पदस्य प्रकरणाङ्गत्वे ज्ञाते कथमुपकरिष्यतीति सन्देहे यथा शक्नोतीत्यवधारिते कथ शक्नोतीत्यपेक्षायां निर्वपामीत्यादिवत् प्रत्यक्षसामर्थ्याभावात् समवेतार्थनिर्वपामीत्यादिपदैकवाक्यतामनुमाय तदन्यथानुपपत्त्या प्रकरणपेक्षितोपकारजननसामर्थ्यंकल्पनपूर्वम अनेन प्रकरणिनमुपकुर्यादिति श्रुतिमनुमाय विनियोगावगते उपांशुयाजादिसन्निध्याम्नातस्य च दधिमन्त्रादेरुपांशुयाजादिप्रत्याकाङ्क्षादर्शनाच्छिध्याद्याकाङ्क्षायाश्च स्वतो निराकाङ्क्षेऽप्युपाध्यायादावाकाङ्क्षोत्पादकत्वदर्शनेनास्या अप्युपांशुयाजादावाकाङ्क्षोत्पादकत्वावगते उपांशुयाजादेर्दधिमन्त्राद्याकाङ्क्षामनुमाय तदेकवाक्यत्वसामर्थ्यश्रुत्यनुमानपूर्वं विनियोगावगतेराध्वर्यवादिसमाख्यातस्य च कर्मणोऽध्वर्य्वादिसम्बन्धदर्शनात्तत्सन्निधिमनुमाय तदाकाङ्क्षैकवाक्यत्वसामर्थ्यश्रुतिकल्पनपूर्वं विनियोगावगतेः परस्य वाक्यादेः पूर्वं लिङ्गाद्यननुमाय विनियोगोक्तिरेव (दर्शनेन निर्वापादिविधिशेषणीभूतस्य स्वार्थाभिधानद्वारा स्वार्थे विधिष्टनिर्वापादिप्रतिपादनसामर्थ्यमनुमायानेनेन निर्वापादि प्रकाशयेदिति श्रुतिकल्पनद्वारा विनियोगावगतेः प्रयाजादेश्च प्रकरणाम्नातस्योभयाकाङ्क्षादर्शनात् प्रकरणिना सहैकवाक्यतैव) नोपपद्यते पूर्वेण तु लिङ्गादिना वाक्याद्यनुमायैव पूर्वं श्रुत्याद्यनुमायेण विनियोगे कृते प्रत्यक्षस्यस्य सामर्थ्यादेनेकवाक्यत्वाद्यन्तरेण प्रमित्यनिर्वाहाद्विनियोगोपायार्थे परस्य वाक्यादेर्नान्तरेणैकवाक्यत्वादिलिङ्गाद्युपपद्यते इत्येवं नान्तरीयकत्वेन सद्भावमात्रं विनियोगहेतुत्वाद्यपेक्ष्या इति बलाबलवैपरीत्यनिरासार्थं नान्तरीयकतोक्ता एकवाक्यत्वादिभिर्विना सामर्थ्यादेर्दृष्टमात्रस्याप्रमितत्वेन श्रुत्यादिकल्पनाद्वारा विनियोजकत्वायोगमाशङ्क्याप्रमितस्यापि गृहाभावादेर्निर्दोषकारणजनितत्वाच्यप्रमितिप्रयोजकयुक्तजातविषयत्वमात्रेण वह्न्यभावादिकल्पकत्ववत्सामर्थ्यादेरपि प्रमितिप्रयोजकत्वाद्युक्तज्ञानविषयत्वमात्रेणैकवाक्यत्वादिभिर्विनाऽनुपपद्यमानस्यैकवाक्यत्वादिकल्पकत्ववत् श्रुत्यादिभिर्विनानुपपद्यमानत्वात् श्रुत्यादिकल्पकत्वस्याप्युपपत्तिसूचयनायेति * इत्युक्तम * सर्वलौकिकानामेव प्रतिपत्तिः सर्वस्वसंवेद्येत्यर्थः । वाक्यादीनामपि श्रुतिकल्पनमात्रेण लिङ्गादिविनियोजकत्वोपपत्तेर्लिङ्गादिकल्पनानपेक्षत्वाच्छ्रुतितः सर्वेषां दौर्बल्ये अपि अन्योन्यं तु-

(१) षष्ठं पा० १ मा० ।

८४८।२ व्यवलतैव युक्तेत्याशङ्कते * आहेति * विनियोगसि-
द्धौ विनियोजकां श्रुतिं कल्पयितुं प्रवृत्तैर्वाक्यादिभिरसमर्थविनि-
योगाद्ययोगेनाङ्गाङ्गिप्रतिपादकशब्दैकवाक्यतां च विनाङ्गाङ्ग्यन्वयायो-
गेनैकवाक्यतामकल्पयित्वा एकवाक्यतायाः कल्पयितुमशक्यत्वात्
समाख्यायाश्चाकाङ्क्षां विनैकवाक्यत्वायोगे साकाङ्क्षमकल्पयित्वा
एकवाक्यतःकल्पयितुमशक्यत्वात् समाख्यायाश्चाकाङ्क्षां कल्पयितुंप्र-
वृत्तवाक्यसंहितालम्बनेन सन्निधिमकल्पयित्वा कल्पयितुमशक्यत्वा-
ल्लिङ्गादीनां यथाक्रममेकादिभिः श्रुतिसमर्थैकवाक्यत्वाकाङ्क्षासन्नि-
ध्यायैर्वस्तुभिर्व्यवधिकारित्वं विनियोगं प्रति विप्रकर्षवैषम्यं बलाब-
लापादकमिति परिहरति * तदिति * लिङ्गवाक्ययोर्मध्यं तावद्वा-
क्यस्यार्थविप्रकर्षमुपपादयितुं प्रतिजानाति * श्रुतिमात्रेति * प्रश्नपूर्व-
मुपपादयति * कथमिति * असमवेतार्थवाचिनां पदानां समवेतार्थ-
वाचिना पदेनैकवाक्यत्वात्समवेतार्थाभिधानशक्तिं कल्पयित्वा श्रुतिः
कल्प्यत इत्यर्थः । श्लोकं व्याचष्टे * सर्वत्र हीति * देवस्य त्वा सवि-
तुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति म-
न्त्रपदानां देवतादिविशिष्टनिर्वापप्रकाशनेन प्रयोगार्हत्वोक्त्या सकल-
स्यैव मन्त्रस्य प्रयोगार्हत्वाभिधानेनैकदेशस्याप्रयोज्यत्वसूचना। अतः
एतेन च प्रयोगार्हत्वं प्रतिपदानां विनियोज्यत्वाभिधानाद्वाक्यसह-
कृतेन लिङ्गेन सकलमन्त्रविषयश्रुत्यनुमानं सूचितम् । एवं तर्हि
स्योनन्ते तस्मिन् सीदेत्यनयोरपि तच्छब्दयोगाधीनैकवाक्यत्वानुप-
पत्त्या तस्मिन् सीदेत्यस्यापि सदनकरणे स्योनन्त इत्यस्यापि च पु-
रोडाशसदनेन सामर्थ्यकल्पनोपपत्तेर्लिङ्गे बाधो न युज्येतेत्याशङ्क्याह
* तथेति * द्वयोः समवेतार्थत्वसम्भवे भेदेन विनियोगाय प्रत्या-
नाविरोधावगतेर्युक्तो बाध इत्याशयः । प्रथिन इति भाष्योपन्यस्त-
निष्ठया प्रस्थानमुक्तम् । लिङ्गेनैकत्र प्राप्यतो वाक्येनान्यत्र नेतुमश-
क्यतां लिङ्गाच्च प्राप्नुवतः स्वप्रकाश्ये ऽर्थे नेष्यतो वाक्याद्वागच्छ-
वृत्त्या ऽप्रकाशकानां प्रश्नपूर्वमुपपादयितुं वाक्याल्लिङ्गस्यार्थप्र-
विप्रकर्षमाह * कथमिति * केवलस्य पदस्याप्रयोज्यत्वात् वाक्यस-
हकृतेन लिङ्गेन सकलस्यैव मन्त्रस्य विनियोगावगतेः तच्छब्दप्रयोग-
स्य च स्योनादेः सुमनस्यमानान्तस्यैकमन्त्रस्यावगमादर्शनेन सामर्थ्येन
तावतः पदसमूहस्य विनियोगसिद्धेः सामर्थ्यान्तरकल्पनानापत्ति-
८४९।१ रित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे * प्रत्युतायां हीति * कल्पया-
म्यन्तस्य स्वार्थविनियोगोपकरणप्रकाशेन नैराकाङ्क्ष्यात् तत्प्रकाशित-
स्योपकरणसंस्कृतस्य सदनशब्दोक्तस्य स्थानस्य तच्छब्देन प्रत्ययात्

